NOW AVAILABLE
AT ALL LEADING STORES

# TRAPPED

## GAMES AND ACTIVITY CD-ROM






PROF. PURENOTHIN, THE RENOWNED INDOLOGIST, IS TRAPPED INSIDE THE MOUND OF MURUKKI. YOU JOIN DETECTIVE MANDOO TO SEARCH FOR THE PROFESSOR AND SAVE HIM. THE ONLY WAY TO THE MOUND OF MURUKKI IS REVEALED TO YOU. ONLY WHEN YOU CAN GET HOLD OF FOUR KEYS HIDDEN ALONG YOUR ROUTE. AND YOU HAVE TO SEARCH FOR THEM THROUGH A DOZEN DIFFERENT GAMES AND ACTIVITIES. GO FOR CLUES AND KEYS!

MIND YOU, YOU HAVE ONLY 60 MINUTES TO REACH THE PROFESSOR! GET THERE FAST, BUT BEWARE OF YOURSELF BEING TRAPPED!



*Hey, but this one is a whole lot of fun! You have a different set of games and activities, every time you begin your search.*

A quality product from **Chandamama**

For more details, please contact :
**Chandamama India Limited,**
82, Defence Officers' Colony,
Ekkatuthangal, Chennai - 600 097.
www.chandamama.org

RS. 199/- ONLY

ENTER

nutrine & CHANDAMAMA

# OLYMPIC QUIZ CONTEST AND WIN ATTRACTIVE PRIZES!

BUMPER PRIZE

Acer Computer

1ST PRIZE



3 Cameras

2ND PRIZE



10 calculators

Beginning from May, your favourite monthly magazine Chandamama in English and all its language editions will carry Nutrine - Chandamama contests for 6 months. All you have to do is to choose the right answers, **fill in the entry form and mail this page, along with 5 wrappers of 'Nutrine Chocolate Eclairs'**, before the closing date, to **Nutrine Chandamama Contest, Chandamama India Limited, 82, Defence Officers's Colony, Ekkatuthangal, Chennai - 600 097.**

It is an all India contest. Every month there will be different questions. There are fabulous prizes to be won. Watch out every month and participate. There will be 3 Konica cameras, 10 Calculators, and 50 Nutrine sweet hampers as first, second and third prizes respectively every month. At the end of the 5 monthly contests, the 6th contest offers a Bumper Draw and the winner will get a Personal Computer, in addition to the regular prizes. Participation in all the 6 months only will entitle the entries for the Bumper Draw. Results of the Bumper draw will be announced in December by post.

## NUTRINE CHANDAMAMA OLYMPIC QUIZ CONTEST

Study the questions carefully and tick [v] the correct answer in the blanks provided for each question.

1. The Olympic Games was revived after a gap of more than 2,200 years. Where was it held?
   London [ ] Paris [ ] Athens [ ]
2. Which country won the most medals in the first of the Modern Olympic Games?
   England [ ] Greece [ ] USA [ ]
3. In which Olympic Games was the Olympic Flame reintroduced?
   Amsterdam [ ] Berlin [ ] Moscow [ ]
4. Which Olympic Games had the maximum number of participating nations?
   Sydney [ ] Atlanta [ ] Seoul [ ]
5. You will find, in the advertisement of Nutrine appearing in this issue, some children enjoying a tasty nutrine chocolate. How many times does the leter 'R' appears in that advertisement?
   3 [ ] 6 [ ] 8 [ ] 9 [ ]





DID YOU KNOW?

OLYMPIA, in Greece, was believed to be the abode of the Greek Gods. Sports festivals were a way of life in Greece as far back as 1370 B.C. According to Greek mythology, Kranos, a Greek God, and Zeuss, the father of Greek Gods, fought on Mount Olympus for the possession of the Earth. Zeuss won and threw a great sports party to celebrate his victory. This is how Olympic Games began.

**Contest Rules :-**

● Employees of Nutrine, Chandamama and their relatives are not eligible for the contest ● The selection of the Judges will be at the sole discretion of Nutrine ● Children of Indian Origin below 15 years age group alone are eligible for the contest ● Nutrine reserves their exclusive right to extend or preclose the contest ● Contestants age proof to be supported by date of birth certificate ● Winners will be selected by draw among correct entries ● Winners will be notified individually ● No cash compensation is allowed in place of prize articles ● Warranty of prize articles are subject to the respective manufacturer ● You can send only one entry per month ● You can participate in any or all of the 6 contests ● No correspondence other than entry forms will be accepted ● Your signing the coupon will mean that you agree to the rules and regulations of the contest given on the coupon ● Entries reaching us after the last date mentioned will be disqualified ● If there are no all correct entries in any event, the maximum number of correct answers will be considered and the entries will go into the lot ● All decisions made by the judges will be final.

**CLOSING DATE : 31ST MAY 2004**

Your Name : ..............................................................

Age : ......... Class: ............... Date of Birth : ....................

Home address and PIN code : ........................................

..............................................................................

Your signature: ..........................................................







India's largest selling sweets and toffees.



# एतस्य अङ्कस्य विशेषाः

सम्पुटः - २१ मे - २००४ सञ्चिका - २



भल्लूकमान्त्रिकः

१३



नागदेवता
(वेतालकथा)

१९



पुराणकथावली

२६



विष्णुपुराणम् - ५

४५

## अन्तरङ्गम्




**ग्राहकशुल्कम् -**
अमेरिका-केनडादेशयोः कृते
प्रतिकृतिमूल्यम् - $२
वार्षिकं शुल्कं - $२०
भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -
**Subscription Division**
**CHANDAMAMA INDIA LIMITED**
No. 82, Defence Officers Colony,
Ekkatuthangal, CHENNAI - 600 097
E.mail : subscription@chandamama.org

### शुल्कविवरणम्
वायुयानेन भारतेतरदेशान् प्रति
**वार्षिकं (१२ सञ्चिकाः) - रू.९००/-**
**भारते रू. १२०/- (बुक्पोस्ट् द्वारा)**
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited' नाम्ना प्रेषणीयम् ।



विज्ञापिकादानार्थं सम्पर्क्यताम् -
चेन्नै - *शिवाजी*, Ph - 044-22313637/22347399 Fax: 044-22312447
Mobile : 98412-77347 e-mail : advertisements@chandamama.org
देहली *मोना भाटिया* - Ph - 011-26515111/26565513/26565516
मुम्बयी *सोनिया देसाई*, Ph - 022-56942407/2408 Mobile : 98209-03124


© एतस्यां सञ्चिकायां परिदृश्यमानानां कथानां पूर्णस्वाम्यं प्रकाशकस्य एव । केनचित् प्रकारेण माध्यमेन वा एतस्य पूर्णतः भागशः वा स्वीकारं ये कुर्वन्ति ते न्यायानुगुणं दण्डनम् अर्हन्ति ।



संस्थापकौ -
**चक्रपाणिः नागिरेड्डी च**

# जलाभावजलाधिक्ययोः विषये विपर्यासः

यदा मे-मासः सम्प्राप्यते तदा अस्माकं देशे जलाभावसमस्या पराकाष्ठां गच्छति । एप्रिल्मासे आरब्धः ग्रीष्मकालः मे-मासे उग्रतां याति । दक्षिणपश्चिमीयः ऋतुवातः जून्मासे आरप्स्यते । तस्मात् दक्षिणभारते वृष्टिः भवति । एषा वृष्टिः जुलैमासे अगस्ट्मासे च अनुवर्तते । दक्षिणपूर्वप्रदेशे अत्यधिका वृष्टिः भवति । तस्मात् देशस्य केचन भागाः अतिवृष्टिपीडिताः भवन्ति । भारते प्रतिवर्षं २००० मिलिमीटरात्मिका वृष्टिः भवति प्रायः । तथापि क्वचित् अनावृष्टिः, क्वचिच्च अतिवृष्टिः । कोऽयं विपर्यासः नाम !

निसर्गः मेघैः वृष्टिं कारयति, भूगर्भात् जलं दापयति च । तथापि अस्माकं देशे जलाभावः ! एतस्याः समस्यायाः निवारणाय त्रिविधः प्रयासः अपेक्षितः इति भाति । प्रथमः प्रयासः - जलस्य दुरुपयोगस्य निवारणम् । द्वितीयः प्रयासः - जलस्रोतसाम् अभिवृद्धिः । एतद्विषये अधिकम् अज्ञानं दृश्यते लोके । वृष्टिजलसंरक्षणाय अनेके उपायाः विधातव्याः, ये च क्वचित् अनुस्त्रियमाणाः दृश्यन्ते । नगरप्रदेशे उपयुक्तस्य जलस्य पुनरुपयोगः अपि चिन्तनीयः । स्नानादिनिमित्तम् उपयुक्तं जलम् उद्यानसेचनाय उपयोक्तुं शक्यः एव खलु ? तृतीयः प्रयासः - योग्येन क्रमेण जलस्य उपयोगः । एषः अंशः अस्माकं जीवनस्य अङ्गम् एव स्यात् । जलस्य उपलब्धेः विषये, गुणस्तर-वर्धनविषये च अधिकम् अवधानं दातव्यम् । कोऽपि जलबिन्दुः व्यर्थतां न गच्छेत् । देशस्य सर्वैः अपि जनैः एतद्विषये विशेषावधानं दातव्यम् ।

एकैकस्य अपि जलबिन्दोः उपयोगः योग्येन क्रमेण चिन्तनीयः एव । 'आधिक्यं यदा तदा सञ्चीयतां जलम्' इत्येतत् अद्यतनं घोषणावाक्यं भवेत् ।

*सम्पादकः* - **विश्वम्**

Visit us at : http://www.chandamama.org





# चन्दमामा

## काचित् विज्ञप्तिः
## अस्माकं वाचकान् हितैषिणः च उद्दिश्य

प्रियमित्राणि !

'अस्माकं ग्राहकाः विना क्लेशं यावत् दातुं शक्नुयुः तावत् एव मूल्यं स्यात् चन्दमामायाः' इति अस्ति अस्माकं सङ्कल्पः । एतदर्थम् एव दीर्घकालं यावत् भगीरथप्रयत्नः अस्माभिः कृतः अपि ।

यदा अस्माकम् एतादृशः प्रयत्नः सर्वथा निर्वोढुम् अशक्यः भवति तदा वयं ग्राहकाणां हितैषिणां च समीपम् अस्मत्समस्यां नयामः । अद्यावधि ते अस्मान् निराशान् न कृतवन्तः ।

गतेषु केषुचित् वर्षेषु मुद्रणसम्बन्धिनां वस्तूनां मूल्यं गगनाभिमुखं गच्छत् आसीत् । तथापि अद्यावधि वयम् एतां मूल्यवृद्धिं सोढवन्तः आस्म । किन्तु एषु दिनेषु मुद्रणकागदस्य (Newsprint) मूल्यम् अकस्मात् यत् प्रवृद्धं तस्य कारणतः अस्माकं मासपत्रिकायाः मूल्यस्य वर्धनम् अपरिहार्यं जातम् । अतः वर्षस्यास्य जुलैमासतः भवताम् एतस्याः पत्रिकायाः प्रतिसञ्चिकं मूल्यं रू. १२.०० भविष्यति, वार्षिकं ग्राहकशुल्कं च रू. १४४.०० भविष्यति ।

भवन्तः अस्माकं परिस्थितिम् अवगच्छन्तः मूल्यवृद्धिं सहन्ते इति भावयामः वयम् । यदि कागदमूल्ये न्यूनता भवेत् तर्हि वयम् एतां पत्रिकाम् इतोऽपि रमणीयां वर्णरञ्जितां च करिष्यामः इति प्रतिशृणुमः ।

सादरं सगौरवं च अभिवन्द्य विरम्यते विस्तरात् ।

बि. विश्वनाथरेड्डी
प्रकाशकः

# करुणापूर्णहृदयः जोसेफ्मैजिनी



मार्गे कश्चन भिक्षुकः दृष्टः चेत् भवद्भिः किं क्रियते ? कोशे स्थितं किञ्चित् धनं दीयते । तावदेव किल । किन्तु इतोऽपि अधिकं साहाय्यं भवद्भिः कर्तुं शक्यते किम् ? परमया करुणया किं सः द्रष्टुं शक्येत ? अत्र तादृशी काचन कथा उपस्थाप्यते । एतस्याः कथायाः नायकः षड्वर्षीयः बालः । भिक्षुकाणां विषये सः कथं चिन्तयति स्म इति इतः ज्ञायते ।

सः बालः कदाचित् इटलीनगरे एकस्मिन् मार्गे मात्रा सह गच्छन् आसीत् । तदा तेन अकस्मात् कश्चन भिक्षुकः दृष्टः । सः बालः एतावत्पर्यन्तं तादृशं दीनं जनं न दृष्टवान् आसीत् । अतः क्षणकालं यावत् सः स्तब्धः अभवत् ।

ततः सः तस्य भिक्षुकस्य समीपं गत्वा तम् आलिङ्ग्य प्रौढः इव तं करुणया दृष्ट्या पश्यन् तस्य कर्णे कानिचन सान्त्वनवचनानि अपि अकथयत् । ततः मातुः समीपं गत्वा प्रार्थितवान् यत् भिक्षुकाय किमपि दीयताम् इति ।

भवन्तः इदानीं मातुः भिक्षुकस्य च प्रतिस्पन्दः कीदृशः स्यात् इति ऊहां कुर्वन्ति इति भावये । तौ आश्चर्येण निष्क्रियौ अभूताम् । भिक्षुकस्य नेत्राभ्याम् अश्रूणि आगतानि ।

सः बालस्य मातरम् उक्तवान् - ''भवत्याः पुत्रः एषः असाधारणः । एषः अस्माकं देशस्य, प्रजानां च महतीं सेवां करिष्यति । अस्य पालनादिकं भवत्या सम्यक् करणीयम्'' इति ।

भिक्षुकस्य वचनं सत्यमेव । स बालः प्रौढः भूत्वा दयालुः पुरुषः इति ख्यातः जातः । तेन स्वदेशे स्थितानां जनानां दुःखं दूरीकर्तुं महान् प्रयत्नः कृतः च ।

सः महान् देशभक्तः अभवत् । सः वदति स्म यत् यदि मम हृदयं भिद्यते तर्हि तत्र 'इटली' इति शब्दः लिखितः दृश्येत इति । सः स्वजीवनं सर्वमपि देशस्य सेवायै एव अर्पितवान् । स आसीत् - प्रसिद्धः इटलीवासी जोसेफमैजिनी ।



# सत्यवतः चमत्कारः

भाग्यपुर्यां सत्यवान् नाम कश्चन महापण्डितः आसीत् । चमत्कारयुक्तानां वचनानां कथनं तस्य वैशिष्ट्यम् । तस्य एतादृशं सामर्थ्यं सर्वैः प्रशंसितम् अभवत् । सकलेषु शास्त्रेषु पारङ्गतः आसीत् सः । तथापि विनयशीलः आसीत् । कस्मिंश्चित् अपि विषये तस्य प्रतिस्पर्धी कोऽपि नासीत् । ग्रामीणाः महता आदरेण तस्य सत्कारं कुर्वन्ति स्म ।

कदाचित् कीर्तिकामः नाम कश्चन पण्डितः तं ग्रामं प्रति आगतः । तस्य मनसि महान् गर्वः आसीत् यत् मया अज्ञातः विषयः कोऽपि नास्ति इति । जनानां मुखतः स्वस्य प्रशंसां श्रोतुं तस्य महती इच्छा । तदर्थं धनं व्ययीकर्तुमपि सः सिद्धः आसीत् । नगरे तस्य वचनानां श्रवणं केऽपि न इष्टवन्तः । अत एव सः एतं ग्रामम् आगतः । एतस्मिन् ग्रामे सः एकं भवनं निर्माय कृष्यर्थं सुविशालां भूमिम् अपि क्रीतवान् ।

कीर्तिकामस्य स्वभावं केचन स्वार्थिनः जानन्ति स्म । ते तस्य प्रोत्साहनं दातुम् आरब्धवन्तः । प्रतिक्षणं प्रशंसां कुर्वन्तः ते तस्मिन् दैवभावमपि आरोपितवन्तः । अनेन क्रमेण ते तस्मात् धनमपि सम्पादितवन्तः ।

प्रशंसकाः केचन लब्धाः इत्यतः कीर्तिकामः एतं ग्रामम् बहु इष्टवान् । आनन्देन जीवनं यापयति स्म सः तत्र ।

कीर्तिकामस्य पत्नी नगरे एव प्रवृद्धा । तस्यै ग्रामजीवनं न अरोचत । प्रशंसां प्राप्तुं पतिः प्रभूतं धनं व्ययीकरोति इति तु तस्याम् असहनाम् अजनयत् । अतः सा नगरे स्थितम् अग्रजं शुभकरं सूचितवती यत् सकृत् अस्मद्ग्रामम् आगच्छतु इति ।

शुभकरः तं ग्रामम् आगतः । शीघ्रमेव तत्रत्या परिस्थितिः तेन ज्ञाता । किन्तु सः आवुत्तस्य सम्बन्धं मधुरतया एव रक्षितुम् इच्छन् 'सावधानतया एतं विषयं

भगिनीपतिः बोधनीयः' इति सः निश्चितवान् । बहुधा विचिन्त्य सः भगिनीपतिं बोधयितुं प्रशंसामार्गमेव आश्रितवान् ।

अथ एकदा सः कीर्तिकामम् उक्तवान् - ''सर्वस्यापि देशस्य ग्रामाः एव आधाराः । भवता ग्रामे वसतिः करणीया इति यः निर्णयः स्वीकृतः सः प्रशंसार्हः एव । किन्तु भवान् न कृषिकः । वाणिज्ये भवतः बुद्धिः बहु तीक्ष्णा । अतः भवता नगरे वाणिज्यं कुर्वता प्रभूतं धनं सम्पादनीयम् इति मम प्रार्थना । आरब्धा कृषिः परित्यक्तुं न शक्या । अतः अहं भवदीयानि कृषिकार्याणि निर्वक्ष्यामि'' इति ।

कीर्तिकामः तु एतत् वचनम् अनङ्गीकुर्वन् उक्तवान् - ''अत्र यावान् आदरः लभ्यते तावान् आदरः धनसम्पादनेन न लभ्यते । नगरे तु एतादृशस्य आदरस्य लेशोऽपि नास्ति । अतः मह्यं एतत् स्थलमेव बहु रोचते'' इति ।

शुभकरः पूर्वमेव जानाति स्म यत् कीर्तिकामः एवमेव उत्तरं दद्यात् इति । अतः सः निराशः न अभवत् । पुनः शान्तेन स्वरेण एव सः उक्तवान् - ''ग्रामे जनाः धनस्य बहुमहत्त्वं न ददति । ते तु निस्स्वार्थभावनया 'कवीन्, पण्डितान्, कलाकारान् च आद्रियन्ते । एतादृशम् आदरम् अस्मिन् ग्रामे सत्यवान् प्राप्तवान् अस्ति । भवतः प्रशंसा यैः क्रियते ते तु भवता दीयमाने धने आसक्ताः'' इति वस्तुस्थितिं उद्घाटितवान् ।

अनेन वचनेन कीर्तिकामः क्रुद्धः । तस्य



अभिमानभङ्गः अभवत् । तस्य मनसि अपि सत्यवतः विषये महान् आदरः आसीत् । किन्तु यदा शुभकरस्य वचनेन ज्ञातं यत् सत्यवान् मम प्रतिस्पर्धी इति, तदा सा आदरभावना ईर्ष्यारूपं प्राप्नोत् । सः अहङ्कारेण शुभकरम् उक्तवान् - ''धनमेव सर्वत्र देवः । सर्वस्य मूलस्य तादृशः सत्यवान् एव मम विषये आदरं यथा प्रकटयेत् तथा अहं कारयामि । मादृशः अन्यः नास्ति इति तस्य मुखात् वाचयिष्यामि । भवान् अपि एतत् प्रत्यक्षीकृत्य गच्छतु'' इति ।

अनन्तरदिने सः सत्यवन्तं प्रति एकं सन्देशं प्रेषितवान् - ''अहं भवतः सम्मानं कर्तुम् इच्छामि'' इति ।

तदा सत्यवान् पृष्टवान् - ''सम्माननं



किमर्थम् ?'' इति ।

कीर्तिकामः तु एतादृशम् उत्तरं न निरीक्षितवान् आसीत् । अतः सः आश्चर्यचकितः सन् चिन्तितवान् - 'कीदृशोऽयं सत्यवान् ! सम्मानस्य प्राप्तिम् अपि निराकरोति एषः ! एषः गर्वी स्यात् महामूर्खः वा । ग्रामीणाः अविचिन्त्य एव एतम् आद्रियन्ते । तेन आत्मनः मूल्यस्य अपि ह्रासं कल्पयन्तः सन्ति । अतः सत्यांशं सर्वान् उक्त्वा मम कीर्तिम् इतोऽपि वर्धयिष्यामि' इति । स्वस्य विचारं शुभकरमपि उक्तवान् सः ।

कीर्तिकामः तद्दिने एव सत्यवतः गृहं गतः । आगतम् अतिथिं सादरं सत्कृत्य सत्यवान् आगमनस्य कारणं पृष्टवान् ।

''प्रतिभायाः मुकुटं धर्तुं प्रतिभायाः आवश्यकता नास्ति । भवतः सम्माननं करणीयम् इति मम तीव्रा इच्छा । भवान् न निराकरोतु कृपया'' इति स्वस्य आगमनकारणं निवेदितवान् कीर्तिकामः ।

''भवतः विचारः प्रशंसार्हः । किन्तु मयि कापि प्रतिभा अस्ति चेत् तस्य मूलं कारणं पाण्डित्यमेव । पण्डितः कश्चिद् आगत्य मां सम्मानयति चेत् मम सन्तोषः भवति । अतः मम पाण्डित्यस्य कः अंशः भवतः सन्तोषजनकः अस्ति ?'' इति पृष्टवान् सत्यवान् ।

एतत् वचनं कीर्तिकामम् अपीडयत् । तथापि तत् अप्रदर्शयन् सः उक्तवान् - ''आर्य ! कारणं ज्ञातुं यदि भवान् निर्बन्धं करोति तर्हि मम श्रेष्ठतायाः विषये सर्वत्र प्रशंसा करोतु । यतः कवयः पण्डिताश्च सम्माननदातॄन् प्रशंसितुं सर्वदा सोत्साहाः भवन्ति इति तु सर्वैः ज्ञातमेव'' इति ।

''एतत् सत्यं स्यात् । मम प्रसिद्धिः भवतः प्रसिद्धेः सदृशी न । किन्तु कस्मिन् विषये भवतः प्रशंसा करणीया मया ?'' इति पृष्टवान् सत्यवान् ।

''प्रशंसां कर्तुं किमर्थम् एतावती कृपणता भवतः ? नगरे अहं महान् वणिक् अस्मि । तादृशं वाणिज्यं त्यक्त्वा अहम् अस्मिन् ग्रामे वसन् अस्मि । एतत् एव मम औदार्यं महत्त्वं च न प्रदर्शयति किम् ?'' इति कीर्तिकामः पृष्टवान् ।

तत् श्रुत्वा सत्यवान् - ''प्रशंसां प्राप्तुं ये ग्रामम् आगच्छन्ति ततः ग्रामस्य किमपि प्रयोजनं नास्ति इत्येव मम अभिप्रायः ।

अन्येभ्यः प्रशंसा प्राप्तव्या इति चिन्तनमेव असमीचीनम्'' इति स्पष्टवचनैः उक्त्वा कीर्तिकामं ततः प्रेषितवान् सत्यवान् ।

एतस्मात् कीर्तिकामस्य मनसि द्वेषाग्निः उद्भूतः । ततः आरभ्य सः ग्रामे सत्यवतः विरुद्धं दुष्प्रचारं कर्तुम् आरब्धवान् । धनाशया पीडिताः केचन ग्रामीणाः 'सत्यवान् कीर्तिकामम् अपमानितवान्' इत्यादिकम् उक्त्वा तम् अहङ्कारिणम् उक्तवन्तः । केचन एतत् वाक्यं सत्यमिति भावितवन्तः । अन्ये केचन तेषां वचसि विश्वासं न कृतवन्तः । किन्तु सत्यवान् अस्मिन् विषये अनादरभावेन व्यवहृतवान् ।

सप्ताहानन्तरम् एकस्मिन् दिने सरोवरे स्नानार्थम् उद्युक्तः सत्यवान् अजागरूकता-कारणतः पतित्वा दश दिनानि यावत् रुग्णः सन् शय्याम् आश्रितवान् ।

'एष एव सुसमयः' इति मत्वा कीर्तिकामः सर्वान् वक्तुम् आरब्धवान् - ''मया यत् कार्यं क्रियते तत् सर्वदा उत्तमम् एव । अत एव मयि भगवतः दया अस्ति । मया सह यः असाधु व्यवहृतवान् तस्मै देवेन एव दण्डः दत्तः'' इति । एवं तस्य अपप्रचारः अधिकः अभवत् ।

एतत् श्रुत्वा सत्यवान् दुःखितः सन् ग्रामाधिकारिणः समीपं गत्वा उक्तवान् - ''कीर्तिकामः मां निन्दन् अपप्रचारमपि कुर्वन् अस्ति । मया तु अस्मिन् विषये न चिन्तितम् अपि । यतः स्वाभिप्रायं वक्तुं सर्वेषाम् अपि स्वातन्त्र्यम् अस्ति एव । किन्तु मम यः आघातः अभवत् सः भगवतः दण्डः इति कथयन् अस्ति सः ।





किमर्थम् ?'' इति ।

कीर्तिकामः तु एतादृशम् उत्तरं न निरीक्षितवान् आसीत् । अतः सः आश्चर्यचकितः सन् चिन्तितवान् - 'कीदृशोऽयं सत्यवान् ! सम्माननस्य प्राप्तिम् अपि निराकरोति एषः ! एषः गर्वी स्यात् महामूर्खः वा । ग्रामीणाः अविचिन्त्य एव एतम् आद्रियन्ते । तेन आत्मनः मूल्यस्य अपि ह्रासं कल्पयन्तः सन्ति । अतः सत्यांशं सर्वान् उक्त्वा मम कीर्तिम् इतोऽपि वर्धयिष्यामि' इति । स्वस्य विचारं शुभकरमपि उक्तवान् सः ।

कीर्तिकामः तद्दिने एव सत्यवतः गृहं गतः । आगतम् अतिथिं सादरं सत्कृत्य सत्यवान् आगमनस्य कारणं पृष्टवान् ।

''प्रतिभायाः मुकुटं धर्तुं प्रतिभायाः आवश्यकता नास्ति । भवतः सम्माननं करणीयम् इति मम तीव्रा इच्छा । भवान् न निराकरोतु कृपया'' इति स्वस्य आगमनकारणं निवेदितवान् कीर्तिकामः ।

''भवतः विचारः प्रशंसार्हः । किन्तु मयि कापि प्रतिभा अस्ति चेत् तस्य मूलं कारणं पाण्डित्यमेव । पण्डितः कश्चिद् आगत्य मां सम्मानयति चेत् मम सन्तोषः भवति । अतः मम पाण्डित्यस्य कः अंशः भवतः सन्तोषजनकः अस्ति ?'' इति पृष्टवान् सत्यवान् ।

एतत् वचनं कीर्तिकामम् अपीडयत् । तथापि तत् अप्रदर्शयन् सः उक्तवान् - ''आर्य ! कारणं ज्ञातुं यदि भवान् निर्बन्धं करोति तर्हि मम श्रेष्ठतायाः विषये सर्वत्र प्रशंसा करोतु । यतः कवयः पण्डिताश्च सम्माननदातॄन् प्रशंसितुं सर्वदा सोत्साहाः भवन्ति इति तु सर्वैः ज्ञातमेव'' इति ।

''एतत् सत्यं स्यात् । मम प्रसिद्धिः भवतः प्रसिद्धेः सदृशी न । किन्तु कस्मिन् विषये भवतः प्रशंसा करणीया मया ?'' इति पृष्टवान् सत्यवान् ।

''प्रशंसां कर्तुं किमर्थम् एतावती कृपणता भवतः ? नगरे अहं महान् वणिक् अस्मि । तादृशं वाणिज्यं त्यक्त्वा अहम् अस्मिन् ग्रामे वसन् अस्मि । एतत् एव मम औदार्यं महत्त्वं च न प्रदर्शयति किम् ?'' इति कीर्तिकामः पृष्टवान् ।

तत् श्रुत्वा सत्यवान् - ''प्रशंसां प्राप्तुं ये ग्रामम् आगच्छन्ति ततः ग्रामस्य किमपि प्रयोजनं नास्ति इत्येव मम अभिप्रायः ।

अन्येभ्यः प्रशंसा प्राप्तव्या इति चिन्तनमेव असमीचीनम्'' इति स्पष्टवचनैः उक्त्वा कीर्तिकामं ततः प्रेषितवान् सत्यवान् ।

एतस्मात् कीर्तिकामस्य मनसि द्वेषाग्निः उद्भूतः । ततः आरभ्य सः ग्रामे सत्यवतः विरुद्धं दुष्प्रचारं कर्तुम् आरब्धवान् । धनाशया पीडिताः केचन ग्रामीणाः 'सत्यवान् कीर्तिकामम् अपमानितवान्' इत्यादिकम् उक्त्वा तम् अहङ्कारिणम् उक्तवन्तः । केचन एतत् वाक्यं सत्यमिति भावितवन्तः । अन्ये केचन तेषां वचसि विश्वासं न कृतवन्तः । किन्तु सत्यवान् अस्मिन् विषये अनादरभावेन व्यवहृतवान् ।

सप्ताहानन्तरम् एकस्मिन् दिने सरोवरे स्नानार्थम् उद्युक्तः सत्यवान् अजागरूकता-कारणतः पतित्वा दश दिनानि यावत् रुग्णः सन् शय्याम् आश्रितवान् ।

'एष एव सुसमयः' इति मत्वा कीर्तिकामः सर्वान् वक्तुम् आरब्धवान् - ''मया यत् कार्यं क्रियते तत् सर्वदा उत्तमम् एव । अत एव मयि भगवतः दया अस्ति । मया सह यः असाधु व्यवहृतवान् तस्मै देवेन एव दण्डः दत्तः'' इति । एवं तस्य अपप्रचारः अधिकः अभवत् ।

एतत् श्रुत्वा सत्यवान् दुःखितः सन् ग्रामाधिकारिणः समीपं गत्वा उक्तवान् - ''कीर्तिकामः मां निन्दन् अपप्रचारमपि कुर्वन् अस्ति । मया तु अस्मिन् विषये न चिन्तितम् अपि । यतः स्वाभिप्रायं वक्तुं सर्वेषाम् अपि स्वातन्त्र्यम् अस्ति एव । किन्तु मम यः आघातः अभवत् सः भगवतः दण्डः इति कथयन् अस्ति सः ।



अस्मिन् विषये भवता एव विचार्य वक्तव्यं यत् मया किम् अनुचितः व्यवहारः कृतः इति'' इति ।

ग्रामाधिकारी शीघ्रमेव विचारणाम् आरब्धवान् । ग्रामे स्थितस्य देवीमन्दिरस्य पुरतः विचारणा आरब्धा । ग्रामजनाानां विश्वासः आसीत् यत् अर्चकस्य द्वारा देवी एव सत्यासत्यतायाः निर्णयं कारयिष्यति इति । अतः एव तस्मिन् विचारणावसरे कोऽपि 'सत्यवान् कीर्तिकामम् अपमानितवान्' इति न उक्तवान् ।

कीर्तिकामः आत्मानं निरपराधं कथयन् उक्तवान् - ''मद्विषये येन अनुचितः व्यवहारः कृतः तस्य हानिः भवत्येव । मम दृढः विश्वासः अस्ति यत् मद्विषये कृतस्य दुर्व्यवहारस्य फलरूपेण एव सत्यवान् पतनम् अनुभूतवान्'' इति उक्तवान् ।

कीर्तिकामस्य व्यवहारेण ग्रामाधिकारी ज्ञातवान् यत् एषः असत्यवादी इति । अतः सः कीर्तिकामम् उक्तवान् - ''भवतः वचने सत्यता अस्ति वा इति द्रष्टुं देव्याः साहाय्यं स्वीकरणीयम्'' इति ।

तदा सत्यवान् उक्तवान् - ''कीर्तिकामस्य वचनानि सत्ययुक्तानि इति अहं भावयामि । यतः स्वस्य प्रशंसा करणीया इति मां सनिर्बन्धम् उक्तवान् आसीत् सः । अहं तु तत् न अङ्गीकृतवान् । एतत् एव मम असाधु कार्यं स्यात् । अत एव मह्यं भगवान् दण्डं दत्तवान् स्यात् । अतः देव्याः साहाय्यस्य प्रार्थना कापि मास्तु'' इति ।

सत्यवतः वचनं श्रुत्वा ग्रामाधिकारी, अन्ये सर्वे च हसितवन्तः । तदा कीर्तिकामस्य शिरः लज्जया अवनतं जातम् । 'शुभकरः पूर्वमेव मां सूचितवान् आसीत् यत् विदुषाम् अपमानकरणं न उचितम् इति । किन्तु अहं तत् अनङ्गीकुर्वन् दुष्कार्ये उद्युक्तः अभवम् । मम कृत्यानुगुणं फलं प्राप्तं मया' इति चिन्तयन् पश्चात्तापेन दग्धः सन् कीर्तिकामः कृषिकार्यस्य निर्वहणं शुभकराय समर्प्य नगरं प्रति प्रस्थितः ।

तदनन्तरं कदापि सः ग्रामं न आगतः एव । तथापि सत्यवतः चमत्कारयुक्तानि वचनानि यदा श्रूयन्ते तदा एषा कथा अपि सर्वैः श्राव्यते स्म एव ।





# भल्लूकमान्त्रिकः

## ५

[राज्ञः जितकेतोः दण्डनाय भल्लूकमान्त्रिकः कालीवर्मणा अन्यैः च सह नगरम् उद्दिश्य प्रस्थितवान् । तावता दुर्मुखराजस्य सैनिकाः अभिमुखम् आगताः । दुर्मुखसमीपं गतः मान्त्रिकः स्वस्य मन्त्रदण्डेन वधकं स्पृष्टवान् । एतस्मात् भल्लूकत्वं प्राप्तवान् वधकः परशुं भ्रामयन् दुर्मुखस्य उपरि अभिपतितवान् । तदनन्तरम्.....]

वधकः आकस्मिकतया भल्लूकरूपं प्राप्य तीक्ष्णं परशुं गृहीत्वा यदा अग्रे आगतः तदा क्षणं यावत् दुर्मुखः दिग्भ्रान्तः जातः । राज्ञः अपायं ज्ञात्वा तस्य रक्षणाय अङ्गरक्षकाः अग्रे आगताः । तान् हस्तप्रहारेण पातयित्वा भल्लूकरूपी वधकः दुर्मुखस्य आसनस्य समीपं गतवान् वेगेन ।

तदा दुर्मखः – ''क्व गताः अस्माकम् सैनिकाः ? अङ्गरक्षकाः क्व गताः ? एतं भल्लूकम् अवरुध्य खड्गेन प्रहृत्य मारयन्तु तावत्'' इति आदिशन् आसनात् उत्थाय धावनम् आरब्धवान् । अनतिदूरे कश्चन अश्वः तेन दृष्टः । तम् आरुह्य अग्रे प्रस्थितवान् सः । कश्चन अङ्गरक्षकः अपि अपरम् अश्वम् आरुह्य तम् अनुसृतवान् ।

सः अङ्गरक्षकः दुर्मुखेण सह गच्छन् अवदत् – ''महाराज ! इदनीम् इतः पलायनम् एव वरम् इति भाति मम ।



अस्माकं सैनिकाः नदीतटे वृक्षाणां मध्ये विश्राम्यन्तः सन्ति । यावत् ते वार्तां प्राप्य अत्र आगच्छेयुः तावता एषः मान्त्रिकः एतस्य भल्लूकस्य द्वारा अस्माकं वधं कारयिष्यति'' इति ।

अङ्गरक्षकस्य वचनं शृण्वन् एव राजा दुर्मुखः मुखं परिवर्त्य दृष्टवान् । परशुहस्तं वधकं दृष्ट्वा भीतः सः अश्वं प्रेरितवान् । अश्वेनापि भल्लूकः दृष्टः । तस्मात् सोऽपि भीतः सन् वेगेन अधावत् ।

अश्वम् आरुह्य अङ्गरक्षकेण सह धावन्तं दुर्मुखं दृष्ट्वा कालीवर्मा भल्लूकमान्त्रिकम् अवदत् – ''गुरुवर्य ! एतस्मिन् परिसरे स्थितयोः उभयोः शासकयोः अन्यतरः इतः पलायितवान् हस्तच्युतः सन् । तम् अनुसृत्य गतः वधकः तं ग्रहीतुं संहर्तुं वा न शक्नुयात् इति भाति मम'' इति ।

भल्लूकमान्त्रिकः दुर्मुखम् अनुसृत्य धावन्तं भल्लूकरूपिणं वधकं पश्यन् एव – ''कालीवर्मन् ! यदि दुर्मुखः वधकस्य परशुतः आत्मनः रक्षणं कुर्यात् तर्हि आवां तस्य संहारं करिष्यावः । अतः अलं चिन्तया'' इति उक्त्वा दुर्मुखस्य मन्त्रिणम् उद्दिश्य अपृच्छत् – ''अये ! भवन्तः चन्द्रशिलानगरं वशीकर्तुं खलु आगताः ? भवतां सेना कुत्र अस्ति ?'' इति ।

एतं प्रश्नं श्रुत्वा दुर्मुखपक्षीयः कश्चित् अवदत् – ''श्रीमन् ! भवान् तु महामान्त्रिकः । अस्माकं सेना कुत्र अस्ति इति एतावता भवता ज्ञातं स्यादेव । तथापि भवता पृष्टम् इत्यतः वदामि । अस्माकं सैनिकाः नद्याः तीरे वृक्षबहुले स्थले तिष्ठन्तः आयुधतीक्ष्णीकरणादिषु कार्येषु उद्युक्ताः सन्ति'' इति ।

एतत् श्रुत्वा भल्लूकमान्त्रिकः सकृत् उच्चैः हसित्वा मन्त्रिणं जीवगुप्तम् उद्दिश्य अवदत् – ''अये, चन्दशिलायाः मन्त्रिन् ! दुर्मुखपक्षीयेण एतेन उक्तं श्रुतं खलु भवता ?'' इति ।

''महाशय ! सर्वं श्रुतं मया । एतस्य सर्वस्य दर्शनस्य अनन्तरं भासते यत् अचिरात् एव मम मतिः भ्रष्टा भविष्यति इति'' इति अवदत् मन्त्री जीवगुप्तः ।

''अहं कालीवर्मा च हिमालयम् उद्दिश्य गन्तुम् इच्छावः । किन्तु तथा गमनात् पूर्वं अन्येषाम् अपि केषाञ्चित् मतिं भ्रंशयित्वा एव गमिष्यावः । युक्तं खलु एतत् ?'' इति हसन् जीवगुप्तं पृच्छन् मन्त्रदण्डेन भूमिं

कुट्टितवान् भल्लूकमान्त्रिकः ।

"सर्वम् अपि कर्तुं समर्थः अस्ति भवान्" इति शिरः अवनमय्य उक्तवान् जीवगुप्तः ।

अत्रान्तरे कालीवर्मा आम्रवृक्षसमूहस्य दिशि दृष्टिं प्रसारयन् भल्लूकमान्त्रिकम् उद्दिश्य – "गुरुवर्य ! बहवः सैनिकाः खड्गं शूलं च गृहीत्वा अस्मद्दिशि एव आगच्छन्तः सन्ति" इति उक्त्वा हस्तेन खड्गं गृह्णन् जितकेतु-सैनिकान् आज्ञापितवान् – "भवन्तः सर्वे सावधानाः भवन्तु" इति ।

दुर्मुखस्य कश्चन सेनापतिः भीत्या इतस्ततः पश्यन् आसीत् । भल्लूकमान्त्रिकः तम् उद्दिश्य अवदत् – "अयि भोः, भवत्सु कश्चित् अग्रे गत्वा तस्य सेनादलस्य प्रमुखं सूचयतु यत् भवतां राज्ञः का गतिः जाता अस्ति इति । तत् ज्ञात्वा अपि यदि ते अस्मान् वशीकर्तुं प्रयासं कुर्युः तर्हि भवतः सर्वान् हरिणान् कृत्वा, अस्मदीयान् च घोरान् व्याघ्रान् कृत्वा तेषां व्याघ्राणां द्वारा हरिणान् खादयिष्यामि" इति ।

"यथा उक्तं तथा कर्तुं समर्थः अस्ति मान्त्रिकः । भवतां नेत्रयोः पुरतः एव तेन वधकः भल्लूकरूपेण परिवर्तितः खलु ?" इति दुर्मुखपक्षीयान् उद्दिश्य अवदत् जीव-गुप्तः ।

दुर्मुखपक्षीयाः एतत् श्रुत्वा परस्परं मुखं दृष्टवन्तः । तेषु कश्चित् अग्रे गत्वा आगच्छतः सैन्यस्य प्रमुखम् अवदत् – "अस्माकं राजा यावत् न प्रत्यागच्छति तावत् अस्माभिः एतस्य मान्त्रिकस्य वचनं पालितं चेदेव वरम् इति भाति" इति ।



तदा सैन्यस्य प्रमुखः स्वसैनिकान् उद्दिश्य अवदत् – "किम् एतस्मात् भयेन ? एषः केवलम् इन्द्रजालं प्रदर्शयति । वयं सर्वे सम्भूय यदि आक्रमणं कुर्याम तर्हि किम् एषः मान्त्रिकः तदनुचराः च संहर्तुं न शक्याः ?" इति ।

"अस्माकं प्रयत्नतः पूर्वम् एव एषः मान्त्रिकः अस्मान् हरिणान् कृत्वा, स्वपक्षीयान् व्याघ्रान् विधाय अस्माकं खादनाय प्रयासं यदि कुर्यात् तर्हि लोके अस्माकं नाम अपि न श्रूयेत । एषः अंशः मनसि स्थापनीयः खलु अस्माभिः ?" इति अवदत् सैनिकेषु कश्चित् ।

"दलपतिवर्य ! वयं सर्वे दुर्मुखमहाराजस्य पादसेवकाः । अतः तस्य कार्याय आत्म-समर्पणं कर्तुम् अस्माभिः सिद्धैः भवितव्यम्



इत्येतत् युक्तिसम्मतम् एव । यदि राजा सजीवं स्यात् तर्हि अस्माकं प्राणपणीकरणस्य कोऽपि अर्थः । यदि एतावता एव सः भल्लूकरूपी वधकः स्वस्य परशुना अस्मद्राजस्य शिरः कर्तितवान् स्यात् तर्हि किम् अस्माकं साहसेन राजभक्त्या वा ?'' इति अवदत् अपरः सैनिकः ।

एतेषां वचनानां श्रवणतः दलपतौ लोभः उत्पन्नः । 'यदि राजा एतावता प्राणैः वियुक्तः स्यात् तर्हि मया एव कुतो वा सिंहासनं प्राप्तुं प्रयासः न करणीयः' इति चिन्तयित्वा सः सैनिकान् अवदत् - ''सर्वं परिशील्यते चेत् भासते यत् चन्द्रशिलानगरस्य स्वायत्तीकरणविचारं परित्यज्य उदयगिरिं प्रति गमनम् एव वरम् इति'' इति ।

भल्लूकमान्त्रिकः कालीवर्माणं पश्यन् अवदत् - ''कालीवर्मन् ! अहं भवन्तम् एतेषां सैनिकानां नायकं कृतवान् अस्मि । भवान् एतान् दुर्मुखसैनिकान् पृच्छतु यत् ते खड्गं भूमौ स्थापयिष्यन्ति उत प्राणान् अर्पयितुं सिद्धाः भवन्ति इति'' इति ।

कालीवर्मा दलपतिसमीपं गत्वा उच्चस्वरेण अपृच्छत् - ''भवद्भिः मम गुरोः वचनं श्रुतं खलु ? खड्गत्यागः भवतां प्रियः, उत प्राणत्यागः ?'' इति ।

दलपतिः कालीवर्माणं भल्लूकमान्त्रिकं च सकृत् अपश्यत् । खड्गयुक्तः तदीयः हस्तः कम्पते स्म । सः क्षीणस्वरेण अवदत् - ''यदि खड्गः परित्यज्येत तर्हि राजद्रोहः आचरितः इव । किं विवेकिनः भवन्तः अस्मान् राजद्रोहकर्मणि प्रवर्तयितुम् अर्हन्ति ? किम् एतत् उचितम् ?'' इति ।

''भवतः एषः प्रश्नः तु तर्कसम्मतः अस्ति । एतदवसरे भवता एतदपि स्मर्तव्यं यत् यः कश्चित् भल्लूकं दृष्ट्वा भीतः सन् भवतः सर्वान् अपायगर्ते पातयित्वा स्वस्य प्राणानां रक्षणाय पलायनं कृतवान् सः किं राजशब्देन निर्देष्टुं योग्यः ? किं तेन राजोचितः व्यवहारः कृतः इति भावयेम ? एतादृशस्य विषये भक्तिः कथं वा प्रशस्ता स्यात् ?'' इति उक्तवान् भल्लूकमान्त्रिकः ।

ततः सः दलपतेः पार्श्वे स्थितं सैनिकं स्वसमीपे आकृष्य तस्य पृष्ठं मन्त्रदण्डेन स्पृशन् - ''अत्र पश्यन्तु ! मया अत्र कश्चन रसः लेप्यते । एतदाधारेण भवन्तः सर्वे द्रष्टुं शक्नुवन्ति यत् भवतां राजा कथं व्यवहरन् अस्ति इति । तस्य का गतिः जाता इत्यपि

ज्ञायते अत्र'' इति अवदत् ।

अनन्तरक्षणे तस्य सैनिकस्य पृष्ठभागः कृष्णवर्णीयः जातः । तन्मध्ये अरण्ये अश्वं चालयन् दुर्मुखः तदङ्गरक्षकः च सर्वैः स्फुटतया दृष्टौ । तयोः पृष्ठतः भल्लूकरूपी वधकः धावन् आसीत् । कश्चन गजः दुर्मुखस्य अभिमुखम् आगत्य स्वशुण्डया तं प्रहर्तुं प्रयासम् अकरोत् । तदा राजा दुर्मुखः सकृत् चीत्कारं कृत्वा अन्यस्यां दिशि स्वस्य अश्वं प्रेरितवान् ।

दुर्मुखम् अनुसृत्य गच्छतः वधकस्य पुरतः गजः शुण्डाम् उन्नीय तिष्ठन् प्रहर्तुम् उद्युक्तः जातः । एतस्मात् क्रुद्धः वधकः सकृत् उच्चैः गर्जित्वा स्वस्य परशुना तस्य गजस्य शुण्डां बलात् प्रहृतवान् ।

एतस्मात् गजस्य शुण्डा क्षतग्रस्ता जाता । सः घीङ्कुर्वन् द्वित्राणि पदानि पृष्ठतः गतवान् । तदा भल्लूकरूपी वधकः तस्य पृष्ठभागम् आरुह्य उपविष्टवान् । सः गजस्य कुम्भस्थले परशोः पृष्ठभागेन प्रहरन् गजं प्रेरयन् उच्चैः गर्जितवान् – ''सः दुष्टः दुर्मुखः क्व गतः ? तस्य शिरः कर्तयिष्यते मया'' इति ।

अत्रान्तरे दुर्मुखः अरण्ये सुदूरं गतवान् आसीत् । तस्य मनसि भीतिः आसीत् यत् वधकः गजश्चापि मम अनुसरणं कुर्वन्तौ स्तः इति । प्रयाणं कुर्वन् एव अङ्गरक्षकः दुर्मुखम् अवदत् – ''महाराज ! मम तु भासते यत् मार्गभ्रष्टौ आवां राज्यसीमाम् अतिक्रम्य अन्यत्र कुत्रापि गच्छन्तौ स्वः इति'' इति ।

एतत् श्रुत्वा दुर्मुखः क्रोधेन अवदत् – ''अये मूर्ख ! प्राणरक्षणं प्रमुखम् इदानीम् ।



राज्यसीमाचिन्तनेन किं वा प्रयोजनम् ?'' इति ।

भल्लूकमान्त्रिकः सैनिकस्य पृष्ठभागे मन्त्रदण्डं चालयन् दृश्यमानं सर्वं निवार्य – ''मया सैनिकस्य पृष्ठभागः येन रसेन लेपितः आसीत् तस्य प्रभावः समाप्तः अस्ति इदानीम् । स्वस्य राज्ञः का गतिः इति भवन्तः दृष्टवन्तः इदानीम् । अग्रे किं करिष्यते भवद्भिः ?'' इति दुर्मुखसैनिकान् अपृच्छत् ।

भल्लूकमान्त्रिकस्य शक्तिम् अवगतवन्तः दुर्मुखसैनिकाः सर्वे युगपत् उक्तवन्तः – ''भवान् एव वदतु – अस्माभिः इदानीं किं करणीयम् इति'' इति ।

''भवन्तः सर्वे अस्मान् अनुसरन्तः चन्द्रशिलानगरम् आगच्छन्तु । तत्रत्यः राजा जितकेतुः सम्यक् दण्डनीयः अस्ति

अस्माभिः । एतस्मात् क्षणात् भवतां नायकः अस्ति एषः कालीवर्मा'' इति अवदत् भल्लूकमान्त्रिकः ।

ततः सर्वे चन्द्रशिलानगरं प्रति प्रस्थित-वन्तः । तस्मिन् समये अरण्ये धावन्तं दुर्मुखं तदङ्गरक्षकं च वृक्षान्तरितः लुण्ठाकनायकः नागमल्लः अपश्यत् ।

सः स्वस्य अनुचरान् अवदत् - ''अग्रे स्थितस्य अश्वारोहिणः वेषभूषादिकं पश्यामः चेत् ज्ञायते यत् एषः महाधनिककुले जातः इति । तम् अनुसरन् स्थितः जनः तस्य सेवकः सैनिकः वा स्यात् । यदि वयम् एतौ सजीवं गृह्णीयाम तर्हि एतयोः विमोचनस्य व्याजेन बन्धूनां सकाशात् प्रभूतं धनं प्राप्तुं शक्नुयाम'' इति ।

तदा नागमल्लस्य कश्चन अनुचरः स्वस्य हस्ते स्थितं पाशरज्जुम् इतस्ततः चालयन् अवदत् - ''श्रीमन् ! एतयोः प्रत्यक्षं सम्मुखी-करणात् विपत्तिः प्राप्तव्या भवेत् कदाचित् । अतः रज्जुं क्षिप्त्वा पाशेन बन्धनम् एव वरम् इति भाति'' इति ।

''महाबुद्धिमान् भवान् । समयोचितप्रज्ञा भवतः । तौ समीपम् आगच्छन्तौ स्तः । भवान् तस्य धनिकस्य कटौ पाशं योजयित्वा रज्जुम् आकर्षतु । यदा सः बद्धः भविष्यति तदा वयम् आक्रमणं करिष्यामः'' इति अवदत् नागमल्लः ।

वराकः दुर्मुखः तदङ्गरक्षकः च सर्वथा न जानीतः स्म यत् भल्लूकरूपिणः वधकात् ऋते अरण्ये अन्यस्मात् अपि अपायाः भवितुम् अर्हन्ति इति । अतः तयोः पूर्णम् अवधानम् आसीत् - वधकतः दूरगमनं कथम् इत्यत्र एव ।

दुर्मुखः यदा वृक्षसमीपम् आगतः तदा नागमल्लस्य अनुचरः स्वस्य हस्ते स्थितां रज्जुं क्षिप्तवान् दुर्मुखम् उद्दिश्य । यदा पाशः दुर्मुखस्य कटौ लग्नः तदा सः नागमल्लानुचरः रज्जुं बलात् आकृष्टवान् ऊर्ध्वभागतः । एतस्मात् दुर्मुखः पाशेन बद्धः जातः । तदीयः अश्वः अग्रे अगच्छत् । तस्मात् दुर्मुखः आकाशे लम्बमानः जातः । तस्मिन् एव समये नागमल्लः अन्ये अनुचराः च खड्गं चालयन्तः वृक्षाणां मध्यतः आगत्य तौ परितः स्थितवन्तः ।

- *(अनुवर्तते)*



# वेताल-कथा

## नागदेवता

आरब्धं कार्यं त्यक्तुम् अनिच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! लोके भवान् एकः एव तादृशः स्यात्, यश्च स्वीकृतं कार्यं कदापि न त्यक्तवान् स्यात् । भवतः व्यवहारः सर्वैः अनुकर्तुं योग्यः अस्ति । किन्तु भवतः प्रयत्नः सफलः भवेत् इत्यत्र नास्ति मम विश्वासः । धर्माङ्गस्य कथा एव अत्र उदाहरणम् । यदा फलं हस्तगतं जातं तदा तत् तिरस्कृतवान् सः । यदि भवता अपि तथा क्रियेत तर्हि सर्वोऽपि प्रयासः व्यर्थः भवेत् । भवतः जागरणाय तस्य धर्माङ्गस्य कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।



अनन्तरं वेतालेन कथा आरब्धा –

धर्माङ्गः विश्वनाथश्च सुहृदौ । परममैत्री तयोः । किन्तु भूषणस्य कारणतः तस्याः मैत्र्याः परीक्षाकालः सम्प्राप्तः ।

भूषणः वञ्चनशीलः । कपटपत्रनिर्माणे सः महाचतुरः । कदाचित् सः एकं कपटपत्रं निर्मितवान् । तत्र लिखितम् आसीत् यत् धर्माङ्गः स्वस्य भूमिं न्यासीकृत्य त्रिसहस्रं सुवर्णमुद्राः स्वीकृतवान् इति । एतादृशस्य पत्रस्य सज्जीकरणस्य अनन्तरं सः धर्माङ्गाय वार्तां प्रेषितवान् – ''मत्तः स्वीकृतम् ऋणं प्रत्यर्पयतु । अन्यथा भवतः भूमिः वशीकरिष्यते मया'' इति ।

धर्माङ्गः एतां वार्तां प्राप्य झटिति न्यायाधिकारिणः समीपं गतवान् । भूषणस्य कपटव्यवहारं विस्तरेण निवेदितवान् च । सर्वं श्रुत्वा क्षणकालं विचिन्त्य न्यायाधीशः अवदत् – ''विचारणां विनैव कस्यचिदपि व्यवहारस्य विषये निर्णयश्रावणं न उचितम् । भवान् निष्कपटः इति, भूषणः कपटशीलः इति च अहं जानामि । तथापि न्यायालयव्यवहारः नियमानुगुणम् एव प्रवर्तेत खलु ? अतः भवता विचारणायाः पूर्वं सहस्रं सुवर्णनाणकानि अत्र न्यासरूपेण स्थापनीयानि । कस्यचित् प्रतिभूत्वम् अपि दातव्यम्'' इति ।

धर्माङ्गसमीपे तावत् धनं न आसीत् । तथापि सः न भीतः । 'मम सज्जनतायां विश्वस्य कोऽपि मह्यम् अवश्यं धनं दद्यात्' इति अचिन्तयत् सः । किन्तु तदीयं कृषिक्षेत्रं हस्तच्युतं जायमानम् अस्ति इति ज्ञात्वा कोऽपि तस्मै ऋणं दातुं सिद्धः न जातः ।

'एतादृश्यां कष्टस्थितौ विश्वनाथः तु अवश्यं साहाय्यं कुर्यात्' इति धर्माङ्गस्य पूर्णः विश्वासः आसीत् । तेषु एव दिनेषु विश्वनाथस्य पिता नितराम् अस्वस्थः आसीत् । तस्य भगिन्याः विवाहः अपि निश्चितः आसीत् । एतस्य सर्वस्य निर्वाहार्थं पञ्चसहस्राधिकाः सुवर्णमुद्राः आवश्यक्यः स्युः इति चिन्तयति स्म सः । अतः सः तावतः धनस्य सङ्ग्रहाय प्रयत्नं कुर्वन् आसीत् । एतस्मिन् एव समये भूषणः तेन मिलित्वा अवदत् – ''अहं भवतः साहाय्यं कर्तुं सिद्धः । किन्तु भवता अपि मम साहाय्यं करणीयम्'' इति ।

भूषणस्य वचनं निराकृतं चेत् धनं न प्राप्यते । तावतः धनस्य प्राप्तिः अन्यतः भवितुं न अर्हति । अतः अनन्यगतिकतया विश्वनाथः भूषणस्य वचनम् अङ्गीकृतवान् ।

एतस्मात् सः धर्माङ्गाय धनस्य प्रतिभूत्वस्य वा दानं निराकृतवान् । एतस्य परिणामतः धर्माङ्गस्य क्षेत्रं भूषणाधीनं जातम् ।

धर्माङ्गः विश्वनाथस्य विषये नितरां क्रुद्धः । विश्वासद्रोहम् आचरितवान् विश्वनाथः मया मारणीयः इति सः अचिन्तयत् । किन्तु अनन्तरक्षणे विचारः आगतः – 'विश्वनाथस्य मारणात् न किमपि प्रयोजनम् । घातकस्य मम शूलारोपणं भवेत् । यदि प्राणहरणविचारं परित्यज्य अङ्गभङ्गः चिन्त्येत तर्हि तस्मात् अपि न प्रयोजनम् । जनाः मां दुष्टं वदन्तः भृशं निन्देयुः' इति ।

प्रतीकारः कथं साधनीयः इति विश्वनाथेन न अवगतम् । ग्रामात् बहिः गुहायां कश्चन विरागी वसति स्म । विश्वनाथः तं दृष्ट्वा स्वस्य कष्टं निवेदितवान् । सर्वे वदन्ति स्म यत् सः विरागी महाशक्तिमान् अस्ति इति ।



विरागी धर्माङ्गस्य कथनं श्रुत्वा अवदत् – "स्वार्थमात्रं चिन्तयन् विश्वनाथः समये भवतः साहाय्यं न कृतवान् । अतः सः योग्यः सुहृत् न । तस्य निन्दनं कुर्वता भवता कीदृशः व्यवहारः चिन्त्यमानः अस्ति ? भवान् तस्य प्राणहरणम् अङ्गभङ्गं च चिन्तयति । अतः भवान् अपि योग्यः सुहृत् न" इति ।

"श्रीमन् ! विश्वनाथेन अपकारः कृतः । अपकृतवतः अपकारचिन्तनं न दोषाय । यदि अङ्गभङ्गादिकं न चिन्त्येत तर्हि प्रतीकारसाधनं कथम् ?" इति अपृच्छत् धर्माङ्गः ।

"इदानीं भवतः मनः प्रतीकारमात्रं चिन्तयति । मानवे स्थितः प्रतीकारभावः सर्पस्य विषम् इव धर्तुः एव हानिं जनयति । अहं विषयुक्तानां साहाय्यं न करोमि । प्रतीकारभावनां विस्मृत्य भवान् पुनः मम समीपम् आगच्छतु । तदा वार्तालापं करवाम" इति अवदत् विरागी ।

"प्रतीकारः अनुचितः इति अहम् अवगच्छामि । किन्तु तस्य दूरीकरणं न जानामि । तदर्थं योग्यं मार्गं भवान् एव उपदिशतु । एषा प्रतीकारज्वाला मया सोढुं न शक्या" इति अवदत् धर्माङ्गः ।

तदा विरागी अवदत् – "एवं तर्हि अहं भवन्तं सर्पं करिष्यामि । तदा भवतः प्रतीकारभावः विषरूपेण परिवृत्तः भविष्यति, भवतः मस्तिष्कं प्रवेक्ष्यति च । यदा भवान् तस्य विषस्य प्रभावतः बहिः आगमिष्यति तदा पुनरपि मानवः भविष्यति । सर्पदशायां भवतः पूर्वजन्मनः स्मरणं भविष्यति, किन्तु



व्यवहारः तु सर्पस्य इव एव । सर्पावस्थायां स्थितं भवन्तं यदि कोऽपि मारयिष्यति तर्हि भवता पुनः मानवजीवनं न प्राप्स्यते । किम् एतत् अनुमन्यते भवता ?'' इति ।

धर्माङ्गः विना चिन्तनं विरागिणः कथनम् अङ्गीकृतवान् । अतः विरागी तं सर्पं कृतवान् ।

सर्परूपं प्राप्तवान् धर्माङ्गः ततः निर्गत्य क्षेत्रेषु अग्रे अगच्छत् । तस्मिन् समये कश्चन कृषिकः कुद्दालेन क्षेत्रे कार्यं कुर्वन् आसीत् । तस्य कुद्दालस्य प्रहारः सर्पस्य पुच्छे लग्नः ।

एतस्मात् नितरां क्रुद्धः सर्पः फणां प्रसार्य फूत्कृतवान् । किन्तु तावता कृषिकः ततः निर्गतः आसीत् ।

फूत्कारं श्रुत्वा समीपस्थात् गुल्मतः अपरः सर्पः बहिः आगतः । सः धर्माङ्गम् अवदत् - ''भवान् तं पुरुषम् अनुसृत्य गत्वा अपायगर्ते पतेत् इति भीतिः आसीत् मम । मानवाः नितराम् अपायकराः । एतत् कदापि न विस्मर्तव्यं भवता'' इति ।

सर्परूपी धर्माङ्गः तेन सर्पेण सह वार्तालापं कुर्वन् सर्पजीवनस्य विशेषान् ज्ञातवान् । तस्मात् तेन अवगतं यत् शिरोभागे स्थितं विषं सर्पैः आत्मरक्षणमात्राय उपयुज्येत, मानवः महतीं हानिं करोति चेदपि यावत् प्राणापायः उपस्थितः न भवति तावत् सर्पैः मानवानां हानिः न क्रियते, सर्पेषु प्रतीकार-भावना न भवति इति ।

सर्वस्य श्रवणस्य अनन्तरम् अपि प्रतीकर-भावस्य त्यागे धर्माङ्गस्य इच्छा न उत्पन्ना । 'विश्वनाथः मम शत्रुः । अतः सः दंष्टव्यः एव । तस्मात् तस्य मरणं भविष्यति । मम च दण्डनं न भविष्यति' इति अचिन्तयत् सः ।

एवं चिन्तयित्वा सर्परूपी धर्माङ्गः ततः विश्वनाथस्य गृहं गतवान् । गृहे प्रकोष्ठे विश्वनाथस्य षड्वर्षीयः पुत्रः क्रीडन् आसीत् । सः सर्पं दृष्ट्वा नितरां भीतः सन् उच्चस्वरेण 'सर्पः सर्पः' इति आक्रोशनम् अकरोत् ।

धर्माङ्गः अचिन्तयत् यत् एतं बालकं दशामि, विश्वनाथं च पुत्रनाशशोकगर्ते पातयिष्यामि इति । अनन्तरक्षणे तस्य मनसि अपरः विचारः आगतः यत् अबोधस्य एतस्य बालस्य दंशनं पापाय इति । अतः सः वेगेन ततः निर्गत्य पूजामन्दिरं प्राविशत् ।

लघुबालकस्य आक्रोशनं श्रुत्वा गृह-सदस्याः सर्वे तत्र आगताः । बालकस्य कथनं श्रुत्वा ते पूजामन्दिरं गतवन्तः । तत्र फणां प्रसार्य स्थितः सर्पः दृष्टः तैः ।

"अहो ! नागदेवः उपस्थितः अस्ति अत्र ! एतस्य ताडनादिकं पापकरम् । इतः परम् अस्माकं विपदः विनष्टाः भविष्यन्ति । विश्वनाथ ! मित्रस्य धर्माङ्गस्य या विपत् आगता तस्याः अपगमाय अपि नागदेवं प्रार्थयतु । नागदेवः भक्ताभीष्टपूरकः अस्ति" इति विश्वनाथस्य माता भक्त्या अवदत् ।

तत्र उपस्थिताः सर्वे भक्त्या नेत्रे निमील्य स्थितवन्तः । एतत् दृष्टवतः धर्माङ्गस्य महत् आश्चर्यम् ! तस्मिन् प्रतीकारभावः एव न उत्पन्नः एतदवसरे !

'हन्तः ! एतस्मात् विषात् न किमपि प्रयोजनं मम' इति चिन्तयित्वा सः दन्ताभ्यां पूजामन्दिरम् एव दष्टवान् । एतस्मात् तस्य शिरोभागे स्थितं विषं बहिः आगच्छत् । अतः तदीयं सर्परूपम् अपगतम् । सः धर्माङ्गरूपेण तत्र अतिष्ठत् । तस्मिन् समये सर्वे नेत्रे निमील्य स्थिताः आसन् । तस्मात् एषा घटना केनापि न ज्ञाता एव । तेषां नेत्रोन्मीलनात् पूर्वम् एव धर्माङ्गः तेषां पृष्ठतः गत्वा स्थितवान् ।

विश्वनाथस्य माता यदा नेत्रे उद्घाटितवती तदा तत्र सर्पः न आसीत् । सर्वे भक्तिभावेन नागदेवतायाः स्तोत्रं कृतवन्तः । विश्वनाथस्य माता नागपञ्चमीदिने प्रतिवर्षं सर्पबिले क्षीरं स्थापयति स्म । तदा तदा पुत्रं वदति स्म यत् नागदेवतायाः कृपाकटाक्षेण सर्वाणि कष्टानि अपगतानि भविष्यन्ति इति ।

विश्वनाथः यदा नेत्रे उन्मीलितवान् तदा पार्श्वे एव धर्माङ्गः दृष्टः तेन । सः आश्चर्यचकितः लज्जितः च । तदा धर्माङ्गः अवदत् - "मित्र ! भवान् कष्टस्थितौ आसीत् । अतः अनन्यगतिकतया भवता मम साहाय्यं



न कृतम् । लघुनः कारणस्य निमित्तं भवतः मैत्रीं त्यक्तुं सिद्धः नास्मि अहम्'' इति ।

एतत् श्रुत्वा विश्वनाथः तत्कुटुम्बजनाः च तं बहुधा प्रशंसितवन्तः । ग्रामजनाः अपि धर्माङ्गस्य औदार्यं प्रशंसितवन्तः । एतस्मात् भूषणे अपि परिवर्तनं जातम् । सः धर्माङ्गाय तदीयं क्षेत्रं प्रत्यर्पितवान् ।

वेतालः एवं कथां समाप्य अवदत् - ''अये राजन् ! विश्वनाथधर्माङ्गयोः मैत्री सुदृढा आसीत् । किन्तु कष्टे पतितः विश्वनाथः धर्माङ्गस्य साहाय्यं निराकृतवान् मित्रद्रोहं च आचरितवान् । प्रतीकारसाधनाय धर्माङ्गः विरागिणः साहाय्यं स्वीकृतवान् । सर्परूपस्य प्राप्तेः कारणम् अपि तदेव आसीत् । तथापि पूजामन्दिरे तेन किमर्थं तादृशः व्यवहारः कृतः ? प्रतीकारसाधनेच्छा किमर्थं तेन परित्यक्ता ? तदीयः सर्वेऽपि प्रयासः व्यर्थः खलु ? मम एतेषां प्रश्नानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् - ''मनुष्याणाम् इव अन्यजीविनाम् अपि कश्चन स्वभावः नियतः भवति । सर्पः दुष्टः भवति, प्रतीकारसाधनपरश्च भवति इति धर्माङ्गः चिन्तितवान् आसीत् अन्यमानवाः इव । विरागी तम् उक्तवान् आसीत् यत् सर्पावस्थायां पूर्वजन्मनः स्मरणं भवति चेदपि व्यवहारस्तु सर्पस्य एव भवति इति । सर्परूपं प्राप्तवान् धर्माङ्गः आकस्मिकतया अपरेण सर्पेण मिलितवान् । तदा तेन ज्ञातं यत् सर्पस्य अङ्गे स्थितं विषम् आत्मरक्षणाय भवति, न तु प्रतीकारसाधनाय इति । सर्परूपस्यापि धर्माङ्गस्य चिन्तनं मानवस्य एव आसीत् खलु ? तेन विश्वनाथस्य मैत्री स्मृता । पितुः अनारोग्यस्य, भगिन्याः विवाहस्य च कारणतः विश्वनाथः साहाय्यं कर्तुं न शक्तवान् आसीत् इति तेन अवगतम् । पूजामन्दिरे सर्पं दृष्ट्वा विश्वनाथस्य मात्रा उक्तात् वचनात् सः एतत्सर्वं ज्ञातवान्, प्रतीकारणभावनां त्यक्तवान् च । तस्मात् एव तदीयं सर्परूपम् अपगतं, मानवरूपं च प्राप्तम्'' इति ।

एवं त्रिविक्रमस्य मौनभङ्गं कर्तुं समर्थः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।






## पलाशः – अरण्यस्य ज्वाला



यस्मिन् अरण्ये बहवः पलाशवृक्षाः भवन्ति तत् ऋतुविशेषे अग्निवर्णीयैः शोभते । तदानीं तत् वर्ण्यते 'अग्निना आवृतम् इव अस्ति' इति । रामायणे एका घटना वर्ण्यते – विन्ध्यपर्वतप्रदेशे सञ्चरन् रामः दूरे अग्निवर्णतां दृष्ट्वा अग्निभ्रमं प्राप्नोत् । यदा समीपं गत्वा दृष्टं तदा अवगतं – पलाशपुष्पाणि एव अग्निभ्रमम् अजनयन् इति । अतः एव पलाशपुष्पाणि 'अरण्यस्य ज्वाला' इति वर्ण्यन्ते । पलाशपुष्पाणि प्रायः मार्च्मासे विकसितानि भवन्ति । काषायवर्णोपेतानि तानि शुभ्रे परिसरे विशेषकान्त्या विराजन्ते । वेदे अपि पलाशवृक्षस्य उल्लेखः कृतः दृश्यते ।

## अतिविशालम् आवासीयं भवनम्

जोधपुरम् (पूर्वम् एतत् जोधघर् इति उच्यते स्म) मेवाडराजानां राजधानी आसीत् । १८५१ तमे वर्षे 'जोध'नामकेन राज्ञा निर्मितस्य एतस्य नगरस्य 'नीलनगरम्' इत्यपि ख्यातिः अस्ति । प्रायः अत्रत्यानि भवनानि नीलवर्णेन लिप्तानि एव । अयं नीलवर्णः सूर्यकिरणान् प्रतिफलयति । तस्मात् भवनस्य अन्तः शीतपरिसरः दृश्यते । मध्ययुगीय-परम्परासम्बद्धाः बहवः अंशाः एतस्मिन् जोधपुरे उपलभ्यन्ते । तेषु अन्यतमम् अस्ति 'उमैदभवनम्' । जगति स्थितेषु आवासीयेषु भवनेषु एतत् एव विशालतमम् इति भाव्यते । २७ एकर्मिते प्रदेशे प्रसृतम् अस्ति एतत् । अत्र १५ उद्यानानि, ३४७ प्रकोष्ठाः च सन्ति ।



# औदार्यं हि सदा श्रेष्ठम्

सुवर्णपुरस्य राजा सुवर्णदेवः धीरः महत्त्वाकांक्षी च । तद्वंशीयानां व्रतशिलाराजवंशीयानां च वैरम् आ बहोः कालात् अनुवर्तते स्म । व्रतशिला सुवर्णपुरस्य प्रतिवेशिराज्यम् । यद्यपि इदानीं व्रतशिलातः भीतिः कापि न आसीत् तथापि राज्ञः विश्वासः न आसीत् यत् अग्रे कदाचित् अपि आक्रमणं न भविष्यति इति । अतः सः स्वसैन्यं सज्जीकृत्य प्रतिवेशिराज्यस्य आक्रमणाय उद्युक्तः ।

एतत् ज्ञात्वा राज्ञी अवदत् - ''शान्तिस्थितौ सत्यां किम् एतेन आक्रमणचिन्तनेन ? व्रतशिलायाः राजा अस्वस्थः इति श्रूयते । अस्माकं गुप्तचरविभागः वदति यत् ततः अस्माकं कापि भीतिः नास्ति इति । एवं स्थिते किं वैरचिन्तनेन ? स्नेहप्राप्तये प्रयासः इदानीम् उचितः स्यात् खलु ?'' इति ।

मन्त्री राज्ञ्याः वचनं समर्थयन् अवदत् - ''महाराज ! व्रतशिलायाः पूर्वतनः राजा अस्मत्पीडकः आसीत् इति तु सत्यम् । इदानीन्तनः राजा तु गम्भीरः शान्तिप्रियः च । अतः ततः आक्रमणं भवेत् इति निरीक्षा सर्वथा नास्ति । अस्वस्थे अपि तस्मिन् प्रजानां प्रीतिः अधिका । युवराजे तु इतोऽप्यधिका प्रीतिः तासाम् । वयम् आक्रमणं कृत्वा जयं प्राप्नुयाम चेदपि तद्देशीयाः प्रजाः महान्तं विरोधं कुर्युः । तस्मात् शान्तिस्थितिः विनश्येत्'' इति ।

''यदा राज्ञः मरणं भविष्यति तदा सिंहासनम् आरोक्ष्यमाणः युवराजः आक्रमणं



न कुर्यात् इत्यत्र कः विश्वासः ? यदा अस्माकं शक्तिः भवति तदा एव आक्रमणं चिन्तनीयम् । अन्यथा शत्रोः आक्रमणकाले वयं क्षीणबलाः सन्तः पराजयं प्राप्नुयाम" इति अवदत् राजा सुवर्णदेवः ।

ततः सुर्वणदेवेन आक्रमणं कृतम् । किन्तु व्रतशिलायाः राजा अस्वस्थः सन् अपि सेनायाः नेतृत्वं स्वयं वहन् रणरङ्गं प्रविष्टवान् । एतस्मिन् युद्धे सुवर्णदेवः व्रणितः जातः । तथापि अन्तिमजयः तु तस्यैव आसीत् । व्रतशिलाराजः तेन संहृतः । किन्तु अयं जयः तस्मै महान्तं सन्तोषं न प्रादात् । यतः युद्धकाले प्राप्तः व्रणः दिने दिने वर्धमानः तं भृशम् अपीडयत् । वर्षं यावत् पीडाम् अनुभूय सः दिवं गतः ।

तस्य एका एव पुत्री आसीत्, न तु पुत्रः कोऽपि । राज्ञी पुत्र्याः निमित्तं योग्यस्य वरस्य अन्वेषणम् आरब्धवती । मन्त्री अन्ये केचन प्रमुखाः च योग्यस्य वरस्य निमित्तं देशे सर्वत्र अटनं कृतवन्तः ।

सप्ताहानन्तरं मन्त्री अचिन्तयत् यत् राजधानीतः अनतिदूरे अरण्ये स्थिते गुरुकुले अधीयानानां तरुणच्छात्राणां विषये दृष्टिस्थापनम् अपि वरम् एव इति । अतः कदाचित् सायङ्कालसमये यात्रिकवेषं धृत्वा सः गुरुकुलमार्गेण गच्छन् गुरुकुलात् अनतिदूरे स्थितायाः शिलायाः उपरि उपविष्टवान् क्रीडतां गुरुकुलच्छात्राणां व्यवहारं परिशीलयन् । तेषु कश्चन च्छात्रः एतस्य अवधानम् आकर्षत् । तस्य विषये अन्येषां सर्वेषां छात्राणां प्रीतिः आदरः च दृष्टः ।



क्रीडासमये कुतश्चित् कश्चन शिलाखण्डः आगतः, तस्य बालकस्य ललाटे व्रणम् अकरोत् च । तस्य ललाटतः रक्तधारा निर्गता । केचन छात्राः समीपे एव प्राप्तानि पर्णानि निष्पीड्य रसं सम्पाद्य व्रणस्य चिकित्सां कृतवन्तः । अन्ये केचन छात्राः, यतः शिलाखण्डः आगतः तस्यां दिशि धावन्तः शिलाक्षेपकस्य ग्रहणाय प्रयासं कृतवन्तः । अल्पे एव काले तैः कश्चन गृहीतः । तम् आकृष्य ते स्वनायकस्य पुरतः उपस्थापितवन्तः ।

"एषः सम्यक् दण्डनीयः" इति अवदत् एकः ।

"पाषाणक्षेपणेन एतस्य ललाटे अपि व्रणम् उत्पादयाम" इति अवदत् अपरः ।

किन्तु तेषां नायकः कोपम् अकुर्वन् तम् अपृच्छत् शान्तस्वरेण - "भवता किमर्थं शिलाखण्डः क्षिप्तः ?" इति ।

''महती बुभुक्षा आसीत् मम । उन्नतायां शाखायां मया कश्चन बीजपूरफलं दृष्टम् । तस्य प्राप्त्यर्थं मया शिलाखण्डः क्षिप्तः'' इति अवदत् सः पुरुषः ।

''भवता बीजपूरं किं प्राप्तम् ?'' इति पृष्टं छात्रनायकेन ।

''आम् । एतावता मया तत् खादितम् अपि'' इति उक्तवान् सः पुरुषः ।

''भवतः बुभुक्षा न शान्ता स्यात् एतावता अपि । एवं ननु ?'' इति अपृच्छत् छात्रनायकः ।

''तत् तु सत्यम् । किन्तु एतस्य खादनात् ग्रामपर्यन्तं गमनाय शक्तिः प्राप्ता मया । अतः अहं ग्रामं गत्वा मन्दिरे किमपि प्राप्नुयाम् । एतत् फलं यदि खादितं न स्यात् तर्हि मूर्च्छां प्राप्ता स्यात्'' इति अवदत् सः पुरुषः ।

''भवान् अस्माभिः सह आगच्छतु । आश्रमे भवते पूर्णोदरं भोजनं दीयते अस्माभिः । रात्रिः आसन्ना अस्ति । अन्धकारे अरण्ये सञ्चारः अपायकरः । प्रभाते भवान् ग्रामं गन्तुम् अर्हति'' इति उक्त्वा तं पुरुषम् आश्रमं प्रति नेतुम् उद्युक्तः अभवत् सः छात्रनायकः ।

''किम् एतत् मित्र ? यः भवन्तं पीडितवान् तस्यापि साहाय्यं किम् उचितम् ?'' इति पृष्टवन्तः केचन छात्राः ।

''मित्राणि ! शिलाखण्डस्पर्शात् अचेतनः वृक्षः अपि तस्मै फलम् अयच्छत् । मानवः सन् अहं वृक्षेण यत् कृतं तदपि कर्तुं किं न शक्नुयाम् ? वृक्षेण फलं दत्तम् । मया च भोजनं दास्यते'' इति अवदत् छात्रनायकः ।

'एतस्य व्यवहारः नितरां श्लाघ्यः । कः स्यात् अयं तरुणः ?' इति स्वगतम् अवदत् मन्त्री प्रवृत्तं सर्वं दृष्ट्वा ।

तान् छात्रान् अनुसरन् सः गुरुकुलं गतवान्, तत्रत्यं गुरुं स्वस्य परिचयम् उक्तवान् च । गुरोः मुखात् ज्ञातं यत् सः तरुणः व्रतशिलायाः युवराजः इति ।

ततः मन्त्री राज्ञ्या सह गत्वा व्रतशिलायाः राज्ञीं दृष्ट्वा विवाहप्रस्तावम् उपस्थापितवान् । तया राज्ञ्या एषः प्रस्तावः अङ्गीकृतः । ततः व्रतशिलायाः युवराजस्य सुवर्णपुरस्य राज-कुमार्याः च विवाहः सवैभवं सम्पन्नः । सः युवराजः एव उभयोः अपि देशयोः राजा जातः । योग्येन क्रमेण राज्यं पालयन् सः 'उत्तमः राजा' इति कीर्तिं सम्पादितवान् ।



# विलक्षणा: घटना:




अमेरिकादेशे नेब्रास्काप्रदेशे बेट्रिस्नामकं नगरम् अस्ति । पञ्चशतः वर्षेभ्यः पूर्वं तत्र कश्चन क्रिस्तालयः आसीत् । सुन्दरे तस्मिन् क्रिस्तालये कश्चन कार्यकर्तृगणः नियततया गानकार्यं करोति स्म । सर्वे सङ्गीतगणीयाः सर्वदा समये उपस्थिताः भवन्ति स्म । तेषां सा प्रवृत्तिः आसीत् ।

किन्तु १९५०तमे वर्षे मार्च्मासस्य प्रथमे दिनाङ्के तस्मिन् क्रिस्तालये काचित् अनूह्या घटना घटिता ।

तत्र वाल्टर् क्लेम्पलः धर्मगुरुः । सः सायङ्कालीनस्य कार्यक्रमस्य सन्नाहस्य निमित्तम् अपराह्णे एव क्रिस्तालयं गतवान् । सपादसप्तवादने प्रार्थना-भवनम् उष्णं यथा स्यात् तथा कर्तुम् अग्निनीडे अग्निं प्रज्वाल्य रात्रिभोजनस्य निमित्तं गृहं प्रत्यागतवान् सः ।

दशाधिकसप्तवादने सः पत्न्या पुत्र्या च सह क्रिस्तालयं प्रति प्रस्थितः । प्रस्थानसमये तस्य पत्न्याः मनसि भावना आगता यत् मम वस्त्रं सुधार्यं नास्ति इति । अतः सा तेषां समीकरणाय (Ironing) पुनः प्रकोष्ठं गतवती । अतः तेषां प्रस्थाने विलम्बः जातः । तस्मात् सा विलक्षणा घटना यदा घटिता तदा ते क्रिस्तालये न आसन् ।

हार्वे आलः वृत्त्या यन्त्रकारः । तस्य पत्नी अन्यत्र गता आसीत् । अतः उभयोः पुत्र्योः पोषणं तेनैव करणीयम् आसीत् । तस्मिन् दिने मित्रेण सह सम्भाषणं कुर्वन् न ज्ञातवान् यत् क्रिस्तालयगमनाय विलम्बः जायमानः अस्ति इति । इतःपूर्वं कदापि तेन एवं न कृतम् आसीत् । सम्भाषणान्ते तेन घटी दृष्टा । तत्र दृश्यते स्म सपादसप्तवादनं जातम् इति ।

मरिलिन् पौला काचित् पियानोवादिका ।





गीताभ्यासाय अर्धघण्टापूर्वमेव गन्तव्यम् इति तस्याः सङ्कल्पः आसीत् । सायङ्कालीनं भोजनं समाप्य सा काकनिद्रायां मग्ना । यदा माता ताम् उत्थापितवती तदा आसीत् सपाद-सप्तवादनम् । 'मुखादिकं प्रक्षाल्य गमनसमये अद्य विलम्बः भविष्यति' इति अचिन्तयत् सा ।

प्रार्थनागीतगणस्य निर्देशिका एफ्. बौला पियानोवादिकायाः माता । पुत्र्या प्रस्थाने विलम्बः कृतः इत्यतः पुत्र्याः उत्थापनात् सज्जीकरणात् च तस्याः अपि विलम्बः जातः ।

तच्च शैत्याधिक्ययुतं दिनम् । शीघ्र-लिपिकारा जोयीब्लक्वर्या शरीरे आलस्यम् अनुभूतवती सा उष्णवायुयुक्ते स्वगृहे अल्प-कालं सुखेन शयितवती । यावत् तया उत्थितं तावता सपादसप्तवादनम् अतीतम् आसीत् । अतः सा विलक्षणा घटना यदा घटिता तदा सा क्रिस्तालये न आसीत् ।

लडोना वन्देग्रिफ्ट् विद्यालयस्य बालिका । रेखागणितस्य समस्या काचित् तां बाधते स्म । तस्याः निवारणाय सा एकाग्रचित्ततया उप-विष्टवती । यावत् तया समस्यायाः समुचितः परिहारः प्राप्तः तावता तु सपादसप्तवादनम् अतीतम् एव आसीत् । अतः या प्रतिदिनम् अविलम्बेन उपस्थिता भवति स्म सा तस्मिन् दिने समये उपस्थातुं न शक्तवती ।

सदिया रोयेना च क्रिस्तालयं प्रति गमनाय सज्जीभूय गृहे स्थिते आस्ताम् । तयोः कार्यानं सम्यक् न आसीत् इत्यतः लडोनां ते निवेदितवत्यौ यत् आवां भवत्या सहैव आगच्छावः, भवती अस्मद्गृह-मार्गेण गच्छतु इति । किन्तु लडोना रेखागणितसमस्यायाः परिहारप्राप्तौ निमग्ना सती समयातिपातं न ज्ञातवती खलु ? अतः विलक्षणघटनायाः समये ते भगिन्यौ गृहे एव आस्तां लडोनां प्रतीक्षमाणे ... ।

ल्युसिल्ला जोन्स्, डोरोथी वुड् च प्रति-वेशिन्यौ सहाध्यायिन्यौ च । प्रार्थनागीत-गानार्थं सदा ते सहैव गच्छतः । यस्मिन् दिने सा विलक्षणा घटना घटिता तस्मिन् दिने ल्युसिल्ला कस्यचित् आकाशवाणीकार्यक्रमस्य श्रवणे निमग्ना, यश्च सप्तवादनतः सार्धसप्त-वादनपर्यन्तं प्रचलति स्म । ध्वन्यङ्कनं कृत्वा पुनरपि तत् श्रोतव्यम् आसीत् तया । अतः सा समये न निर्गता । तस्मात् तां प्रतीक्षमाणा डोरोथी अपि गृहे एव स्थितवती । अतः विलक्षणघटनाकाले ताभ्यां क्रिस्तालये न



उपस्थितम् ।

लिर्यानार्ड् चस्टर् तस्याः पुत्री च युक्ते एव समये गृहात् निर्गतवत्यौ आस्ताम् । किन्तु लिर्यानार्डया काश्चित् गोष्ठीं प्रति गमनाय मातुः साहाय्यं करणीयम् आसीत् इत्यतः सा मातुः गृहं गतवती । ततः निर्गमनसमये अल्पः विलम्बः जातः एव । तस्मात् सा अपि विलक्षणघटनासमये क्रिस्तालये न आसीत् ।

हर्बाट् किफ् लेत्यन्त्रचालकः । सः सर्वदा अपि सपादसप्तवादनात् पूर्वम् एव क्रिस्तालये उपस्थितः भवति स्म । किन्तु तस्मिन् दिने कस्यचित् पत्रस्य लेखने निमग्नः सः 'समयः अतिक्रान्तः' इत्येतत् न लक्षितवान् एव । यदा तेन पत्रलेखनं समापितं तावता सपादसप्तवादनम् अतीतम् आसीत् ।

तस्मिन् दिने, तन्नाम १९५० तमवर्षस्य मार्च्मासस्य प्रथमे दिनाङ्के यस्मिन् समये सङ्गीताभ्यास-गणेन क्रिस्तालये मेलनीयम् आसीत्, ततः दशानां निमेषाणाम् अनन्तरं, तन्नाम पञ्चविंशत्यधिकसप्तवादने (७.२५) कश्चन महास्फोटः जातः तस्मिन् क्रिस्तालये । स्फोटशब्देन तत् बेट्रीस-नगरं प्रतिध्वनितं जातम् । स्फोटजनिताः अग्नितारकाः आकाशे स्फुरिताः । स्फोट-कारणतः क्रिस्तालयस्य भित्तयः ध्वस्ताः । काष्ठमयी छदिः धराशायिनी जाता ।

सौभाग्यवशात् तस्मिन् समये तत्र कोऽपि न आसीत् । यैः सङ्गीताभ्यासगणस्य सदस्यैः प्रतिदिनं समये उपस्थितैः भूयते स्म, तेषु एकैकोऽपि एकैकस्मात् कारणात् तस्मिन् समये न उपस्थितः । अनुपस्थितेः कारणानि तु क्षुल्लकानि आसन् । आकाशवाणीकार्यक्रमस्य श्रवणं, पत्रलेखनं, काकनिद्रा, गणितसमस्या, वस्त्रस्य अस्तव्यस्तता, कार्यानस्य अनागमनम् इत्यादीनि एव कारणानि । एतानि सर्वाणि अपि युगपत् एव उपस्थितानि आसन् । एतत् कथं सम्पन्नम् ? किं कापि शक्तिः एवं कारितवती ? यदि कापि शक्तिः एवं कारितवती न स्यात् तर्हि कथं वा एकैकस्य पुरतः एकैकं कारणम् उपस्थितं भवेत् ?

क्रिस्तालये कथं स्फोटः जातः ? वास्तविकं कारणं न ज्ञातम् । तथापि एवम् ऊह्यते - इन्धनानिलस्य नलिकायां जातात् भङ्गात् अनिलः निर्गतः स्यात्, अग्निसम्पर्कात् अनिल-



व्यवस्थायाम् एव अग्नेः प्रसारात् स्फोटः जातः स्यात् इति ।

सङ्गीताभ्यासगणीयाः तस्याः घटनायाः अनन्तरं प्रवृत्तं समग्रं स्मृतिपटलम् आनीत-वन्तः ।

'अज्ञाता दिव्या शक्तिः एव एकैकस्य पुरतः एकैकं कारणाम् उपास्थापयत्, तस्मात् एव अस्माकं प्राणाः रक्षिताः अभवन्' इति स्वगतं वदन्तः ते देवं मनसा नमस्कृतवन्तः । किं भवन्तः अपि अज्ञातशक्तौ विश्वासवन्तः ?

# नागाल्याण्ड्राज्यस्य जानपदकथा

## नागाजनैः अञ्जीरवृक्षाः किमर्थं न कर्त्यन्ते ?

पूर्वं कदाचित् प्रवृत्तायाः घटनायाः कारणतः कोऽपि नागाजनः अद्यापि अञ्जीरवृक्षं न कर्तयति । पूर्वम् एवं प्रवृत्तम् आसीत् ....

कदाचित् केनचित् नागायुवकेन घनारण्य-मार्गेण प्रवासः करणीयः आपतितः । तदीयः ग्रामः उन्नतानां पर्वतश्रेणीनाम् उपत्यकायाम् आसीत् । धैर्यशाली सः नागायुवकः जानाति स्म यत् गमनमार्गे अरण्ये अनेके पिशाच-निशाचरादयः दुष्टजीविनः वसन्ति, ते पृष्ठ-भागतः एव आक्रमणं कुर्वन्ति, निर्दयं खादिष्यन्ति च इति ।



मध्येमार्गं कश्चित् लघुः दुष्टजीवी भयानकाभ्यां नेत्राभ्यां भयम् उत्पादयितुं प्रयत्नं कृतवान् । किन्तु नागायुवकः तस्मात् किञ्चिदपि भीतः न अभवत् । सः स्वस्य छुरिकया तं खण्डशः कर्तितवान् ।

किन्तु तावता अन्धकारः प्रसरन् आसीत् । मार्गे आगतानां सर्वेषां निशाचराणां नाशनम् अशक्यम् इति सः ज्ञातवान् । अतः सः रात्रेः यापनार्थं सुरक्षित-स्थलस्य अन्वेषणे मग्नः अभवत् ।

सः पर्वतमयप्रदेशे वर्धमानस्य श्वेतपुष्पस्य कस्यचित् वृक्षस्य समीपं गतवान् । सः वृक्षः रमणीयैः पुष्पैः सुन्दरेण काण्डेन च शोभते स्म ।

'एतादृशः सुन्दरः वृक्षः निश्चयेन मह्यम् आश्रयं दद्यात्' इति युवकस्य चिन्तनम् आसीत् ।

''अद्य रात्रौ यदि अहं योग्यम् आश्रयस्थानं न प्राप्नुयां तर्हि निशाचराः मां मारयेयुः । अतः अद्य रात्रौ कृपया मां भवतः शाखानां पृष्ठतः गोपयतु'' इति सः युवकः वृक्षं प्रार्थितवान् ।

सः वृक्षः एतत् निराकुर्वन् - ''अहम् आश्रयं दातुं न शक्नोमि । ते पिशाचाः भवन्तम् अन्विष्यन्तः आगत्य मम पुष्पाणि नाशयेयुः ।

पर्णानि अपि पातयेयुः । एवं चेत् मम का गतिः ? अहमेव भीतः अस्मि । भवान् अन्यत्र कुत्रापि गच्छतु'' इति उक्तवान्, अहङ्कारेण पुष्पाणि पर्णानि च कम्पितवान् च ।



तावता पूर्णरूपेण अन्धकारः प्रसृतः आसीत् । तस्य युवकस्य आतङ्कः अधिकः अभवत् । सः अपरस्य वृक्षस्य समीपं गतवान् । ''भवान् मह्यं किम् आश्रयं दद्यात् ? यदि भवान् मह्यम् आश्रयं न दद्यात् तर्हि ते पिशाचाः रात्रौ आगत्य मां खण्डशः कर्तयित्वा खादेयुः'' इति तं वृक्षम् उक्तवान् ।

सः वृक्षः अपि – ''क्षम्यताम् ! अहं भवतः साहाय्यं तु कर्तुम् इच्छामि । किन्तु न शक्नोमि । भवता अन्यः कोऽपि वृक्षः अन्वेष्टव्यः'' इति उक्त्वा स्वस्य खड्गसदृशानि पर्णानि चालितवान् ।

निकटे एव कश्चन महान् अञ्जीरवृक्षः विराजते स्म । असहायः कश्चित् युवकः आश्रयं प्रार्थयन् वृक्षतः वृक्षं प्रति अटन् अस्ति इति सः अञ्जीरवृक्षः अवगतवान् ।

युवकं दृष्टवतः तस्य वृक्षस्य मनसि करुणा उत्पन्ना । 'मम समीपम् आगच्छतु' इति सः युवकम् असूचयत् ।

अनन्तरं सः वृक्षः उक्तवान् – ''मम शाखाः विशालतया प्रसृताः सन्ति । घनाः अपि सन्ति । मम शाखाः भवन्तम् आरात्रि निशाचरेभ्यः रक्षन्ति । पिशाचाः भवन्तम् अन्विष्य आगच्छन्ति एव । तेषु एकं भवान् मारितवान् इत्यतः भवता बहु जागरूकता आश्रयणीया । भवता एकः अपि शब्दः न उच्चारणीयः । श्वासोच्छ्वासः अपि वेगेन न करणीयः । अवशिष्टम् अहं चिन्तयिष्यामि'' इति ।

सः युवकः वृक्षम् आरुह्य शाखासु आत्मानं गोपितवान् । वृक्षस्य शाखासु तस्य शरीरं पूर्णरूपेण गोपितम् अभवत् । अरण्ये गाढान्धकारः प्रसृतः आसीत् । कीटानां चर्-चर्शब्दमात्रं श्रूयते स्म । किञ्चित्कालानन्तरं निशाचराः ते लघुपिशाचाः बहिरागताः । ते पिशाचाः स्वस्य सहोदरस्य मारणं कृतवतः युवकस्य अन्वेषणे निरताः आसन् ।

वृक्षतः वृक्षं प्रति गच्छन्तः केचन पिशाचाः – ''कुत्र सः ?'' इति गर्जन्तः आसन् । अन्ये केचन पिशचाः – ''अस्माकं सहोदरं मारितवतः तस्य कियत् धाष्टर्यम् ? वदन्तु । कुत्र सः ? वयं तं मारयामः'' इति

वृक्षान् उक्तवान्तः । तदा अन्यः कश्चित् पिशाचः – ''यदि सः लभ्यते तर्हि तस्मै यः आश्रयं दत्तवान् तमपि वयं न त्यजामः । पूर्णरूपेण तस्य नाशनं कुर्मः । एकः केशः एकः दन्तः वा सुस्थितौ यथा न स्यात् तथा करिष्यामः'' इति उक्तवान् ।

तावत् उक्त्वा ते पिशाचाः युवकम् अन्विष्यन्तः आक्रोशनं कुर्वन्तः कोपेन तं युवकं भाययितुं प्रयत्नं कृतवन्तः । अरण्यस्य प्रतिकोणं गत्वा सहोदरं मारितवतः युवकस्य अन्वेषणम् आरब्धवन्तः । ते पिशाचाः उच्चैः कोलाहलं कुर्वन्तः आसन् । तेषां कोलाहल-कारणतः कीटानां ध्वनिः, वायोः शब्दः वा सर्वथा न श्रूयते स्म ।

ते उच्चस्वरेण – ''कुत्र सः मनुष्यः ?'' इति वक्षान् पृष्टवन्तः ।

तदा सर्वे वृक्षाः – ''निश्चयेन वयं न जानीमः'' इति उक्तवन्तः । अन्ते पिशाचाः अञ्जीरवृक्षस्य समीपम् आगतवन्तः । तत्रैव सः युवकः निलीय स्थितवान् आसीत् । पिशाचाः वृक्षं पृष्टवन्तः – ''दुष्टः युवकः कुत्र इति किं भवान् जानाति ?'' इति ।

अञ्जीरवृक्षः फलैः पूर्णः आसीत् । फलानां भारस्य कारणतः वृक्षः अवनतः आसीत् । सः वृक्षः – ''सः युवकः कुत्र गतवान् इति मया न दृष्टम् । सः अत्र तु नास्ति । भवद्भिः अरण्यस्य अन्यस्मिन् भागे तस्य अन्वेषणं करणीयं भवेत्'' इति उक्तवान् ।

पिशाचाः आक्रोशनं कुर्वन्तः ततः निर्गतवन्तः । यथा यथा ते दूरं गतवन्तः तथा तथा तेषां ध्वनिः अस्पष्टः अभवत् । अरण्ये पुनश्च शान्तिः प्रसृता ।

पुनश्च कीटानां ध्वनिः आरब्धः । यदा वातावरणं पूर्ववत् अभवत् तदा सः युवकः शाखाः अपसारयन् बहिः आगतवान् । बहिः आगत्य प्रीत्या अञ्जीरवृक्षम् आलिङ्गितवान् ।

अनन्तरं सः – ''भवतः उपकारम् अहं कदापि न विस्मरामि'' इति प्रतिज्ञां कृतवान् ।

ततः सः स्वग्रामं प्राप्य गृहं गत्वा प्रवृत्तं सर्वं सर्वान् उक्तवान् । अञ्जीरवृक्षस्य साहाय्यम् अपि कृतज्ञतापूर्वकं स्मृतवान् ।

युवकः निरापदं प्रत्यागतवान् इत्यतः रात्रौ भोजोत्सवः आयोजितः ग्रामजनैः । तत्र ते सर्वे प्रतिज्ञां कृतवन्तः यत् युवकस्य रक्षकाय वृक्षाय अवश्यं गौरवर्पणं करणीयम् अस्माभिः इति ।

अतः अद्यापि नागाजनाः अञ्जीरवृक्षं न कर्तयन्ति । केदारस्य मध्यभागे भवति चेदपि ते तु तं वृक्षं सर्वथा न कर्तयन्ति ।



# वार्ताविशेषः




## २८ घण्टाः यावत् प्रबन्धलेखनं गान्धिवर्यस्य विषये

'राष्ट्रपिता' इति ख्यातं महात्मानं गान्धिवर्यम् अधिकृत्य लिखितं साहित्यं विपुलतया उपलभ्यते । सः 'हरिजन'नामिकायां स्वकीयायां पत्रिकायां बहून् विचारान् यत् प्रकटितवान् आसीत् तदपि प्राप्यते एव । एतत्सर्वम् आधारीकृत्य २४ घण्टाः यावत् कृतेन अखण्डप्रयासेन कश्चन प्रबन्धः लेखनीयः इति सङ्कल्पितवती चेन्नैनगरीया एकदशकक्ष्यायाम् अधीयाना इ. नन्दिनी ।

चेन्नैनगरस्य मरीनाप्रदेशे स्थिते गान्धिमण्डपे तया एतदर्थं सन्नाहः कृतः । अनुकूलः सर्वविधः अपि परिसरः तत्र सज्जः जातः । फेब्रवरीमासे कस्मिंश्चित् दिने प्रातः दशवादने स्वस्य एतं 'यज्ञं' परिसमापितवती सा । कमपि पुस्तकम् अदृष्ट्वा सर्वं स्वस्य स्मृतिबलेन एव लिखितवती सा । भवन्तः एव कल्पनां कुर्वन्तु - एतदर्थं सा कियतः विषयान् स्वस्य मस्तिष्के सङ्गृहीतवती आसीत् इति ।

## अखण्डम् इन्द्रजालप्रदर्शनम्

तमिळुनाडुराज्ये तिरुचिरापल्लिप्रदेशे ए. अलेक्साण्डर्-नामकेन २४ घण्टाः यावत् अखण्डम् इन्द्रजालप्रदर्शनं कृतम् । तेन सङ्कल्पितम् आसीत् यत् गिन्नीसुपुस्तके स्वनाम योजनीयम् इति । तस्मात् गिन्नीसुपुस्तक-प्रकाशकाः इण्डियन् मेजिक् हाबीस असोसियेसन्, इण्टर्न्याषनल् ब्रदर्हुड् आफ् मेजीशियन्स् इत्येते संस्थे निवेदितवन्तः आसन् यत् प्रत्यक्षं दृष्ट्वा प्रदर्शनस्यास्य वास्तविकता प्रमाणीकरणीया इति । प्रदर्शनस्यास्य दर्शकाः आसन् उच्चाः सर्वकारीयाधिकारिणः, विविधाः पत्रिकाकाराः च ।





# जीवनस्य उद्देशः

बाल्ये एव लक्ष्मणस्य मातापितरौ दिवं गतौ । अतः अपारायाः सम्पत्तेः उत्तराधिकारी जातः सः ।

तदीयौ मातापितरौ तं महता प्रेम्णा पालितवन्तौ आस्ताम् । तस्य अल्पम् अपि कष्टं यथा न स्यात् तथा जागरूकतां वहतः स्म तौ । अतः सः न जानाति स्म यत् कष्टं कीदृशं भवति इति । धनसम्पादने कियत् कष्टम् अस्ति इत्यपि न जानाति स्म सः ।

लक्ष्मणस्य स्वभावः उत्तमः आसीत् । हृदयम् अपि निष्कल्मषम् । यदि कोऽपि कठोराणि वचनानि वदति तर्हि अपि नितरां खिन्नः भवति स्म सः । यतः तस्य हृदयं तादृशं सुकोमलम् आसीत् । मातापित्रोः विशेषप्रीतिः आसीत् तस्य । तस्मात् तयोः चिरवियोगं सोढुं न शक्तः जातः सः ।

तस्मात् निद्राहारादयः त्यक्ताः तेन । सर्वदा मातापितरौ एव स्मरन् हृदयेन महत् दुःखं निरन्तरं वहन् एव दिनानि यापयति स्म सः । तस्य दुःखस्य निवारणाय बान्धवैः मित्रैः च बहुधा प्रयासः कृतः । ते तम् उक्तवन्तः – ''जीवनं बहुमूल्यवत् अस्ति । दिवङ्गतानां स्मरणं कुर्वद्भिः जीवनं व्यर्थतया याप्यते चेत् न किमपि प्रयोजनम् । मृतानाम् आत्मनः तृप्तिः सम्पादनीया चेत् सफलं जीवनं यापनीयम् । कौटुम्बिकजीवनेन कुलसन्ततिः वर्धनीया'' इति ।

किन्तु लक्ष्मणः कस्यापि वचनस्य पालने आसक्तः न जातः । एतस्मिन् एव समये केचन स्वार्थसाधकाः युवकाः तस्य मैत्रीं सम्पादितवन्तः । गच्छता कालेन ते तं स्वस्य गर्ते पातितवन्तः । कमपि व्याजम् उक्त्वा प्रभूतं धनं तस्मात् स्वीकृत्य दुर्व्यसनार्थं व्ययीकुर्वन्ति स्म ते ।

एतस्मिन् एव काले रामदासः नाम कश्चन मध्यवयस्कः लक्ष्मणस्य गृहम् आगतवान् । लक्ष्मणः तं नखशिखान्तं दृष्ट्वा अपृच्छत् – ''कः भवान् ? केन उद्देशेन अत्र

आगतं भवता ?'' इति ।

तदा रामदासः मन्दहासपूर्वकम् उक्तवान् - ''अहं भवतः दूरबन्धुः । भवतः पितृव्यतुल्यः अहम् । भवतः योगक्षेमस्य विचारणाय आगतः अस्मि'' इति ।

एतत् श्रुत्वा लक्ष्मणः अश्रूणि स्रावयन् मातापित्रोः गुणगानम् आरब्धवान् ।

'' वत्स ! अलं चिन्तया । अहं भवतः दुःखस्य निवारणोपायं कथयिष्यामि । किं भवान् मम वचनं पालयितुं सिद्धः ?'' इति अपृच्छत् रामदासः ।

लक्ष्मणः अश्रूणि मार्जयन् - ''आम् । तं मार्गं वदतु तावत्'' इति ।

''यदि भवान् अत्रैव वसेत् तर्हि प्राचीनाः स्मृतयः भवन्तं बाधेरन् । अतः भवान् मया सह अस्मद्ग्रामम् आगच्छतु । तत्र एकं विशालं भवनं विक्रेयम् अस्ति । तत् क्रीत्वा भवान् सुखेन वासं कर्तुम् अर्हति । अत्रत्याः सर्वे क्लेशाः तत्र अपगमिष्यन्ति'' इति अवदत् रामदासः ।

एतं प्रस्तावम् अङ्गीकुर्वन् लक्ष्मणः अनन्तरदिने रामदासेन सह प्रस्थितवान् । रामदासस्य ग्रामे विशालं भवनं क्रेतव्यम् आसीत् इत्यतः प्रभूतं धनम् अपि स्वीकृत्य प्रस्थितवान् आसीत् लक्ष्मणः ।

यदा तौ क्रोशमितं दूरम् अतिक्रान्तवन्तौ तावता केचन लुण्ठाकाः हठात् आक्रमणं कृत्वा छुरिकादिप्रदर्शनेन भीतिम् उत्पाद्य लक्ष्मणसमीपे विद्यमानं धनग्रन्थिं वशीकृत्य ततः पलायितवन्तः ।

''अहो ! किम् एतत् जातम् !'' इति



वदन् लक्ष्मणः अश्रूणि स्रावयन् तत्रैव उपविष्टवान् ।

रामदासः तम् उत्थाप्य तस्मिन् धैर्यं पूरयन् अवदत् - ''वत्स ! चिन्तया अलम् । एतान् लुण्ठाकान् ग्रहीतुं वयं कमपि उपायं चिन्तयिष्यामः'' इति । ततः तौ लक्ष्मणस्य ग्रामं प्रत्यागतवन्तौ ।

इदानीं गृहमात्रम् एव लक्ष्मणस्य सम्पत्तिः आसीत् । तत् गृहं विक्रेतुं न इच्छति स्म सः । गृहं विक्रीतं चेत् वासाय स्थलम् एव न भवेत् इति जानाति स्म सः । जीवनयापनाय तेन इदानीम् अनन्यगतिकतया धनं सम्पादनीयम् एव आसीत् ।

रामदासः तस्मिन् धैर्यं पूरयन् अवदत् - ''लक्ष्मण ! अहं मम ग्रामतः किञ्चित् धनम् आनेष्यामि । तेन धनेन भवान् कृषियोग्याम् उत्तमां भूमिं क्रीणातु । तत्र कृषिः कृता चेत्



उत्तमं जीवनं कर्तुं शक्यते । कानिचन दिनानि अहम् अपि अत्र भवता सह स्थास्यामि साहाय्याय'' इति ।

लक्ष्मणः एतत् अङ्गीकृतवान् । ततः रामदासः स्वगृहतः धनम् आनीतवान् । ग्रामाधिकारिणः साहाय्येन ग्रामसीमायां स्थिता उत्तमा भूमिः क्रीता । तत्र लक्ष्मणेन कृषिः आरब्धा । रामदासः लक्ष्मणेन सह गच्छन् महान्तं परिश्रमं कृतवान् कृष्यर्थम् । कृषिकार्ये गृहकार्ये च तौ परस्परं साहाय्यं कुरुतः स्म ।

एकस्मिन् दिने तौ पाककार्ये निमग्नौ आस्ताम् । तदा ग्रामाधिकारिणः षोडश-वर्षीया पुत्री गौरी तत्र आगतवती । तौ पाककार्ये निरतौ दृष्ट्वा सा - ''हा हन्त ! किमेतत् ! पुरुषौ भवन्तौ एवं पाकार्थं परिश्रमं कुरुतः खलु !! सर्वथा अनुचितम् एतत् । केनचित् सूचितः मम पिता माम् अत्र प्रेषितवान् अस्ति वस्तुस्थितिज्ञानाय । श्वः एव अहं अस्मद्गृहस्य पाचकस्य भगिनीम् अत्र प्रेषयिष्यामि पाकाय'' इति उक्त्वा गृहे सर्वत्र अटित्वा तत्रत्यां स्थितिं परीक्ष्य ततः निर्गतवती ।

वर्षाभ्यन्तरे एव कृषिक्षेत्रे उत्तमा फल-समृद्धिः प्राप्ता । रामदासः लक्ष्मणः च धान्यगोणीः गृहं प्रति आनीतवन्तौ । धान्यसङ्ग्रहं दृष्टवतः लक्ष्मणस्य मनः प्रफुल्लितम् आसीत् ।

एतत् दृष्ट्वा रामदासः लक्ष्मणस्य स्कन्धे प्रीत्या हस्तं स्थापयन् अवदत् - ''लक्ष्मण ! भवता अपि आत्मनि जातं परिवर्तनं लक्षितं स्यादेव । गतेषु षट्सु मासेषु भवता मातापितरौ सकृत् अपि न स्मृतौ । तयोः विषये अल्पा चिन्ता अपि न कृता । गतस्य धनस्य विषये, भाविजीवनविषये चैव सर्वदा विशेषचिन्ता आसीत् भवतः'' इति ।

''एतत् तु सत्यम् एव'' इति आश्चर्य-पूर्वकम् उक्तवान् लक्ष्मणः ।

रामदासः पुनः अवदत् - ''एतत् एव जीवनं नाम । उदरपूरणं प्रमुखं भवति मानवजीवने । यदा उदरं पूर्णं भवति, यदा च सर्वविधानि आनुकूल्यानि भवन्ति, तदा मानवः व्यर्थविषयान् अधिकृत्य चिन्तयन् समयं व्यर्थीकरोति । अतः मानवेन सदापि कस्मिंश्चित् कार्ये आत्मा प्रवर्तनीयः । धन-सम्पादनाय प्रयासः करणीयः । स्वस्य स्थितिम् उत्तमां कुर्वता तेन अन्येषां साहाय्यम् अपि करणीयम् । तदा एव सः

चिन्ताभ्यः दूरे स्थातुम् अर्हति'' इति ।

''आम् । भवता युक्तम् एव उक्तम्'' इति वदन् लक्ष्मणः रामदासं नमस्कृतवान् ।

''ग्रामाधिकारी भवतः पितरि स्नेहवान् आसीत् । अहं यथा भवतः दूरबन्धुः अस्मि तथैव सोऽपि भवतः दूरबन्धुः एव । भवन्तं दुःखगर्ते पतितं, स्वार्थसाधकैः मित्रैः आवृतं च दृष्ट्वा नितरां खिन्नः सः सर्वं वृत्तान्तं मां श्रावितवान् । भवतः उद्धाराय मां प्रेषितवान् सः एव । भवतः धनं यैः लुण्ठितं ते वस्तुतः लुण्ठाकाः न । ते ग्रामाधिकारिणा प्रेषिताः आसन् । अतः भवतः धनं ग्रामाधिकारिणः समीपे सुरक्षिततया तिष्ठति अद्यापि । ग्रामाधिकारिणः पुत्री गौरी भवता दृष्टा खलु ? पाचकस्य भगिनीम् अत्र प्रेषयन्त्या तया महान् उपकारः कृतः । भवतः अनुपस्थितौ तदा तदा अत्र आगत्य सा गृहव्यवस्थाम् अपि परिशीलयति स्म । पाकस्य रुचिम् अपि परीक्षते स्म । भवतः कोऽपि क्लेशः यथा न भवेत् तथा सर्वं व्यवस्थापनीयम् इति तस्याः प्रयत्नः आसीत्'' इति उक्त्वा क्षणकालस्य मौनस्य अनन्तरं सः अपृच्छत् – ''तस्याः विषये भवतः अभिप्रायः कः ?'' इति ।

''सा सुन्दरी बुद्धिमती च अस्ति । सर्वदा सा सर्वैः सह स्मेरानना सती सम्भाषते'' इति अवदत् लक्ष्मणः ।

तदा हसन् अवदत् रामदासः – ''गौरीविषये भवतः अभिप्रायं ज्ञातुम् उत्सुकः अस्ति ग्रामाधिकारी । गौरी भवते अरोचत इति तु भवतः वचनात् एव स्पष्टम् । गौर्यै भवान् अपि रोचते इइत मया श्रुतम् । भवतः आशयम् अहं ग्रामाधिकारिणं वदिष्यामि । सः भवतोः विवाहम् अचिरादेव निर्वर्तयतु नाम'' इति ।

एतत् श्रुतवतः लक्ष्मणस्य मनः प्रफुल्लितं जातम् । जीवनं नूतनानाम् आनन्दानाम् आशानां च अन्वेषणाय अस्ति, न तु व्यर्थचिन्तया यापयितुम् इति अवगतम् आसीत् तेन । ततः अल्पे एव काले लक्ष्मणगौर्योः विवाहः सवैभवं सम्पन्नः । 'मम कार्यं सिद्धम्' इति चिन्तयन् रामदासः स्वग्रामं प्रति गतवान् आनन्देन ।



# मनसः दृढता

रङ्गनाथः द्वादशवर्षीयः बालः । यद्यपि सः गुरुकुलं गतवान्, तथापि तस्य अध्ययनं सम्यक् न प्रचलति स्म । सः अध्ययने मनः प्रवर्तयितुं कष्टम् अनुभवति स्म । अतः परीक्षायाम् उत्तीर्णता न प्राप्यते स्म तेन ।

एतस्मात् पिता तस्य निन्दनम् आरब्धवान् । पूर्वं माता विविधानि खाद्यानि करोति स्म । इदानीं तत् स्थगितवती सा । एतत्सर्वं दृष्ट्वा रङ्गनाथः खिन्नः । अतः सः पुनरपि परीक्षार्थं सन्नाहम् आरब्धवान् ।

कदाचित् सः गृहस्य पुरतः उपविष्टः आसीत् । पूर्वदिने क्रीडासमये सः व्रणितः जातः आसीत् । मक्षिका काचित् व्रणं परितः भ्रमति स्म । रङ्गनाथः तां दूरं प्रेषितवान् । तथापि मक्षिका पुनरपि आगत्य व्रणस्य उपरि उपविष्टा । तस्मात् रङ्गनाथस्य कोपः प्रवृद्धः । अतः सः उच्चैः तां तर्जितवान् ।

तस्मिन् एव समये तेन मार्गेण गोविन्दः नाम अध्यापकः गच्छन् आसीत् । सः रङ्गनाथस्य तर्जनं श्रुत्वा कारणं पृष्टवान् । तदा रङ्गनाथः मक्षिकायाः पीडां निवेदितवान् । सर्वं श्रुत्वा अध्यापकः अवदत् - ''रङ्गनाथ ! सा मक्षिका अल्पकाया । तथापि आत्मना इष्टस्य निमित्तं आरब्धं प्रयत्नं न त्यजति । भवान् तु मानवः । बुद्धिमत्ता शक्तिः च भवतः अस्ति एव । एवं स्थिते आरब्धं प्रयत्नं किमर्थं त्यजति भवान् ? मनसः दृढता कुतो वा न शक्यते भवता ? प्रयत्ने कृते साफल्यं कुतो वा न प्राप्येत ?'' इति ।

एतत् श्रुतवतः रङ्गनाथस्य मनसि विचारतरङ्गाः उत्पन्नाः । तस्मात् एव दिनात् सः पूर्णेन मनसा पठनम् आरब्धवान् । मासाभ्यन्तरे प्रवृत्तायां परीक्षायां सर्वेषां प्रश्नानाम् उत्तरं लेखितुं समर्थः जातः सः । अतः प्रथमा श्रेणी तेन प्राप्ता ।



# वाचकानां कृते कथास्पर्धा

## चिता कथापूर्तिः अर्हति रू. २५० पारितोषिकत्वेन

**अधस्तनां कथां पठन्तु –**

विजयपुर्याः राजा वेषान्तरं धृत्वा रात्रौ राजधान्याम् अटति स्म । एवम् अटनसमये मार्गस्य पार्श्वे, वृक्षाणाम् अधः च शयितवन्तः बहवः जनाः दृष्टाः तेन । सः निर्णीतवान् यत् कोऽपि कुटुम्बः गृहहीनः न स्यात् मम राज्ये इति । अतः सः उद्घोषणं कारितवान् – 'गृहापेक्षिणः सर्वे अमुके दिने प्रासादस्य पुरतः सम्मिलिताः भवेयुः' इति ।



तस्मिन् दिने सहस्रशः जनाः प्रासादस्य पुरतः सम्मिलिताः । तेभ्यः सर्वेभ्यः गृहं निर्माय दातुं सामर्थ्यं नास्ति इति राजा नितरां खिन्नः ।

तदा मन्त्री कमपि उपायं सूचितवान् ।

सः मन्त्री जनान् उद्दिश्य किम् उक्तवान् स्यात् ?

- धनं दातव्यम् इति किम् उक्तं स्यात् तेन ?
- गृहनिर्माणाय कर्मकरत्वेन कार्यं करणीयम् इति किम् उक्तं स्यात् तेन ?
- धनात् श्रमसेवातः च ऋते किम् अन्यत् किमपि अपेक्षितवान् स्यात् सः ?

**स्वस्य अभिप्रायं १००-१५० शब्दैः लिखित्वा पिहितपत्रस्य उपरि 'Story contest' इति लिखित्वा अधस्तनेन प्रवेशपत्रेण सह प्रेष्यताम् –**

**अन्तिमः दिनाङ्कः ३०, मे २००४**

नाम ---------------------- वयः ------- जन्मदिनाङ्कः ----------

विद्यालयः ---------------------------- कक्ष्या ----------

गृहसङ्केतः ----------------------------------------

----------------------------------------------------

---------------------------- Pincode --------------

पोषकस्य हस्ताक्षरम्　　　　　　　　भागग्रहीतुः हस्ताक्षरम्

**CHANDAMAMA INDIA LIMITED**

82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097



# महाश्रेष्ठिनः शिष्यः

ब्रह्मदत्तः यदा काशीराज्यं परिपालयन् आसीत् तदा बोधिसत्त्वः कस्मिंश्चित् वणिक्परिवारे जन्म प्राप्तवान् । सः बुद्धिमान् शकुनशास्त्रप्रवीणः च आसीत् । अतः जनाः तं 'महाश्रेष्ठि'पदेन निर्दिशन्ति स्म ।

कदाचित् सः राजास्थानं प्रति गच्छन् मध्येमार्गं कश्चित् मृतं मूषकं दृष्ट्वा पार्श्ववर्तिनं जनम् अवदत् - ''बुद्धिमान् कश्चित् तरुणः एतं मृतं मूषकम् एव मूलधनत्वेन उपयुज्य वाणिज्यं कृत्वा धनं सम्पाद्य सुन्दरीं तरुणीं परिणेतुम् अपि अर्हेत्'' इति ।

मार्गे गच्छन् कश्चन तरुणः तदीयं वचनं श्रुतवान् । सः उत्तमे वंशे जातः । किन्तु दैवदुर्विपाकात् इदानीं दरिद्रः अस्ति सः । सः तं मृतं मूषकं नीत्वा कस्यचित् आपणिकस्य मार्जाराय आहाररूपेण दत्त्वा मूल्यरूपेण एकां काकणिकां प्राप्तवान् ।

तया काकणिकया गुडं क्रीत्वा घटे जलं पूरयित्वा सः अरण्यमार्गस्य पार्श्वे उपविष्टवान् । अरण्यात् पुष्पाणि चित्त्वा प्रत्यागच्छन्त्यः मालाकारिण्यः गुडखण्डं खादित्वा जलं पीत्वा तस्मै कृतज्ञतां समर्पयन्त्यः कानिचन पुष्पाणि दत्तवत्यः ।

सः तरुणः तेषां विक्रयणं कृतवान् । तस्मात् तेन काश्चन काकणिकाः प्राप्ताः ।

अनन्तरदिने अधिकं गुडं क्रीत्वा जलेन सह सः पुनरपि मार्गपार्श्वे उपविष्टवान् आसायम् । तस्मात् बह्व्यः मालाकारिण्यः ततः जलं स्वीकृत्य पीत्वा सन्तोषेण बहूनि पुष्पाणि दत्तवत्यः । तैः मालाः रचयित्वा विक्रयणं कृतवान् सः तरुणः । एवं प्रतिदिनम् अपि कुर्वन् कतिपयदिनाभ्यन्तरे सः अष्ट रजतनाणकानि सम्पादितवान् ।

एकस्मिन् दिने वायुसहिता महावृष्टिः

जाता । तस्मात् राजोद्याने काश्चन शुष्काः वृक्षशाखाः पतिताः । 'मया एकाकिना अद्य उद्यानस्य स्वच्छता कथं कर्तुं शक्या ?' इति उद्यानपालकः चिन्तयन् आसीत् ।

तावता सः तरुणः तत्र गत्वा अवदत् - ''वृक्षशाखाः, पर्णानि च मह्यं दीयन्ते चेत् अहम् उद्यानस्य स्वच्छतां करिष्यामि'' इति ।

उद्यानपालकः एतं प्रस्तावं ससन्तोषम् अङ्गीकृतवान् । सः तरुणः ततः अनतिदूरे एव क्रीडद्भ्यः बालेभ्यः गुडखण्डान् दत्त्वा तान् उद्यानस्वच्छताकार्ये नियोजितवान् । ते वृक्षखण्डान्, शाखाः, पर्णानि च नीत्वा उद्यानात् बहिः राशीकृतवन्तः ।

तेन मार्गेण गच्छते कुम्भकाराय तानि दत्त्वा प्रतिफलरूपेण बहून् घटान् प्राप्तवान् सः तरुणः ।

अनन्तरदिने सः नगरसीमायाम् उपविश्य जलवितरणं कृतवान् । पञ्चशतं तृणविक्रेतारः तस्मात् जलं प्राप्य उक्तवन्तः यत् भवान् यादृशं साहाय्यम् इच्छति तादृशं साहाय्यं वयं करिष्यामः इति । तरुणः अवदत् - ''अग्रे कदाचित् साहाय्यं प्रार्थयिष्यामि'' इति ।

कदाचित् तेन युवकेन ज्ञातं यत् कश्चन अश्वविक्रेता पञ्चशता अश्वैः सह नगरम् आगच्छन् अस्ति इति ।

अतः सः तृणविक्रेतृणां समीपं गत्वा उक्तवान् - ''भवद्भिः उक्तम् आसीत् खलु यदा आवश्यकं तदा साहाय्यं प्रष्टव्यम् इति । इदानीं तदर्थं कालः उपस्थितः अस्ति । भवद्भिः श्वः मह्यम् एकैकः तृणबन्धः दातव्यः । श्वः यावदहं तेषां विक्रयणं न करिष्यामि, तावत् भवद्भिः तृणविक्रयणं न



करणीयम्'' इति ।

ते तृणविक्रेतारः एतत् अङ्गीकृतवन्तः । तेषु एकैकोऽपि एकैकं तृणबन्धम् अयच्छत् । अनन्तरदिने अश्वविक्रेता पञ्चशता अश्वैः सह तत् नगरम् आगतः । तेन नगरे कुत्रापि तृणानि न प्राप्तानि । अतः सः तस्य तरुणस्य समीपे विद्यमानानि सर्वाणि तृणानि क्रीत्वा सहस्रं सुवर्णनाणकानि दत्तवान् ।

कानिचन दिनानि गतानि । अत्रान्तरे कदाचित् तेन वार्ता श्रुता यत् वस्तुभिः पूर्णा काचित् महानौका नौकास्थानकं प्रति आगच्छन्ती अस्ति इति । सः तरुणः झटिति अष्टभिः सुवर्णनाणकैः भाटकशकटम् एकं प्राप्य धनिकः इव व्यवहरन् नौकास्थानकं गतवान् । नौकायां स्थितानां सर्वेषां वस्तूनां विक्रयणाधिकारं, नौकास्थानके आपण-स्थापनाधिकारं च सः धनं दत्त्वा प्राप्तवान् ।

वस्तुयुक्ता नौका नौकास्थानम् आगता इति वार्तां श्रुत्वा शतं वणिजः वस्तु-क्रयणाय नौकासमीपम् आगताः । तैः ज्ञातं यत् केनचित् तरुणेन नौकास्थानां सर्वाणि वस्तूनि इतः पूर्वम् एव क्रीतानि इति । ते अन्यां गतिम् अपश्यन्तः तस्य तरुणस्य समीपं गताः ।

युवकः नौकास्थानि वस्तूनि योग्येन मूल्येन विक्रीतवान् । एकैकस्मात् द्विसहस्रं सुवर्ण-नाणकानि स्वीकृत्य आपणस्थापनस्थलम् अपि विक्रीतवान् ।

एतस्मात् तेन लक्षं सुवर्णनाणकानि सम्पादितानि । ततः सः महाश्रेष्ठिनः गृहं गत्वा आत्मना सम्पादितं धनं दर्शितवान् ।

महाश्रेष्ठी प्रसन्नतया अपृच्छत् - ''एतावत् धनं कथं सम्पादितं भवता ?'' इति ।

''महानुभाव ! भवतः उपदेशं प्राप्य मास-चतुष्टयाभ्यन्तरे मया एतत् सर्वं सम्पादितम्'' इति उक्त्वा सः तरुणः धनसम्पादनकथां विस्तरेण श्रावितवान् ।

सर्वं श्रुत्वा महाश्रेष्ठी अचिन्तयत् - 'एषः निश्चयेन महाबुद्धिमान् अस्ति । मम सम्पत्तेः उत्तराधिकारी भवितुम् एषः एव अर्हः' इति ।

अतः सः योग्ये मुहूर्ते स्वस्य एकमात्रपुत्रीं तस्मै दत्त्वा वैभवेन विवाहं निर्वर्तितवान् । स्वस्य समग्रं व्यवहारं सम्पत्तिं च तदधीनं कृतवान् च । महाश्रेष्ठिनः दिवङ्गतेः अनन्तरं सः तरुणः 'श्रेष्ठी' इति उपाधिं प्राप्तवान् ।





# विष्णुपुराणम्

भगवान् विष्णुः जयविजयौ उद्दिश्य पृष्टवान् – ''महामुनीनां शापः व्यर्थः भवितुं न अर्हति । तः भवद्भ्यां शापः तु अनुभोक्तव्यः एव । अतः वदतां – भवन्तौ मयि मैत्रीभावं प्रदर्शयन्तौ सप्त जन्मानि यापयितुम् इच्छतः, उत द्वेषभावं प्रदर्शयन्तौ मद्द्वारा मरणं प्राप्य त्रीणि जन्मानि यापयित्वा अत्र आगन्तुम् इच्छतः ?'' इति ।

तदा जयविजयौ जन्मत्रयं प्राप्य विष्णोः सान्निध्यस्य प्राप्तेः वरं याचितवन्तौ ।

जयविजययोः एतस्याः अपेक्षायाः प्रशंसां कुर्वन्तः सनकादयः मुनयः विष्णुम् उद्दिश्य – ''भगवन्, अस्माभिः इदानीम् अवगतं यत् भवतः दृष्ट्या रागद्वेषौ समानौ इति । ये भवन्तं द्विषन्ति ते इतोऽप्यधिकं भवतः निकटाः भवन्ति । अस्माभिः अविचिन्त्य भवतः द्वारपालयोः कृते शापः दत्तः । तदर्थं वयं पश्चात्तापम् अनुभवन्तः स्मः । कृपया अस्मान् क्षाम्यतु'' इति उक्त्वा लक्ष्मी-नारायणयोः स्तुतिं कुर्वन्तः ततः निर्गतवन्तः ।

तदनन्तरं जयविजयौ कश्यपप्रजापतेः पत्न्याः दित्याः गर्भतः हिरण्यकशिपु-हिरण्याक्षरूपेण जन्म प्राप्तवन्तौ ।

तौ उभौ अपि सहोदरौ अत्यन्तं पराक्रम-युक्तौ आस्ताम् । घोरं तपः आचर्य ब्रह्माणं प्रसन्नं कृत्वा वरं प्राप्य विष्णुं प्रति द्वेषम् आरब्धवन्तौ तौ ।

हिरण्यकशिपुः राक्षसानां राजा भूत्वा विष्णोः सम्मुखीकरणं कर्तुं निश्चितवान् । हिरण्याक्षः विष्णुं कोपयितुं विविधान् अत्याचारान् कृतवान् । पृथिवीं लुण्ठयन् रसातलसमुद्रे पातितवान् सः । पृथिवी



रसातलसमुद्रे निमग्ना अभवत् । भूदेवी विष्णोः स्तुवती स्वस्य उद्धारं प्रार्थितवती ।

विष्णुः भूदेव्याः अनुग्रहं कर्तुं दशावतारेषु तृतीयं वराहावतारं गृहीतवान् ।

ब्रह्मा होमं कुर्वन् आसीत् । तदा यज्ञकुण्डात् शुभ्रकान्त्या मण्डितः कश्चन कणः उद्गतः । सः कणः एव वर्धमानः अरण्यवराहस्य रूपधारणम् अकरोत् । तं वराहं विष्णोः रूपम् इति मत्वा ब्रह्मादिदेवाः 'यज्ञवराहः', 'श्वेतवराहः', 'आदिवराहः' इत्यादिभिः शब्दैः तस्य स्तुतिं कृतवन्तः ।

यज्ञवराहः वर्धमानः विशालरूपधारणं कृतवान् । तस्य पादाः बलिष्ठाः आसन् । तस्य चर्म लोहवत् कठोरम् आसीत् । दंष्ट्राः वज्रवत् तेजस्विन्यः आसन् । तस्य नेत्राभ्याम् अरुणकान्तिः प्रसरति स्म । तस्य रोमाणि स्वर्णवत् प्रकाशन्ते स्म । सः स्वस्य हुङ्कारेण समग्रं विश्वं गुञ्जितं कारयन् आसीत् । तस्य वराहस्य ललाटे खड्गसदृशं शृङ्गं विराजते स्म ।

सः वराहः विद्युद्वेगेन रसातलं प्रति धावितवान् । तस्य गतेः कारणेन दिशः कम्पिताः । प्रलयकालीनः झञ्झावातः आरब्धः इव ।

यज्ञवराहः रसातलसमुद्रं प्रविश्य तत्र निमग्नां पृथिवीं स्वस्य शृङ्गेण उन्नीतवान् । तदा एव हिरण्याक्षः वरुणस्य उपरि आक्रमणं कृत्वा युद्धार्थम् आह्वानं दत्तवान् आसीत् ।

तदा वरुणः - ''वस्तुतः भवान् महावीरः । अतः भवान् पृथिवीम् उन्नेतुं समर्थेन यज्ञवराहेण सह एव युद्धं करोतु । सः युद्धे भवत्तुल्यः शक्तिशाली च अस्ति'' इति उक्तवान् ।

एतत् श्रुत्वा हिरण्याक्षः झटिति यज्ञवराहस्य उपरि आक्रमणं कृतवान् ।

वराहरूपधारिणा विष्णुना सह युद्धं कुर्वाणः हिरण्याक्षः पराक्रमेण विष्णोः गदाम् उड्डायितवान् । विष्णुः तस्य युद्धकौशलस्य प्रशंसां कृत्वा स्वस्य गदां पुनश्च गृहीतवान् । अनन्तरं तयोः मध्ये भीकरं युद्धं प्रवृत्तम् । अन्ते वराहः स्वस्य शृङ्गेण प्रहृत्य हिरण्याक्षं हतवान् ।

वराहरूपधारिणं विष्णुं भूदेवी वृतवती । वराहमूर्तिः भूदेवीम् उन्नीय स्वस्य अङ्के उपवेशितवान् । ब्रह्मादिदेवाः तयोः उपरि पुष्पवर्षणं कृत्वा जगत्पतिरूपेण विष्णुं स्तुतवन्तः ।

वराहावतारं प्राप्य मम अनुजस्य मारणं कृतवतः विष्णोः संहारः मया करणीयः एव इति हिरण्यकशिपुः निश्चितवान् । अतः

ब्रह्मणः सकाशात् वरं प्राप्तव्यम् इति सः निश्चितवान् । ब्रह्माणं प्रसन्नं कर्तुं तपसः आचरणाय सः यदा प्रस्थितवान् तदा तस्य पत्नी लीलावती गर्भवती आसीत् ।

लीलावत्याः गर्भं भेत्तुम् इन्द्रः मायाजालं रचितवान् । लीलावतीं बद्ध्वा आकाशमार्गेण नयन् आसीत् इन्द्रः । मध्येमार्गं नारदः मिलितवान् ।

सः इन्द्रम् उद्दिश्य - "इन्द्र ! भवान् महत् अन्याय्यम् आचरन् अस्ति । एतं मार्गं त्यजतु भवान् । ईर्ष्यया वा हिरण्यकशिपुः विष्णोः स्मरणं कुर्वन् भवति । अतः लीलावत्याः गर्भे वर्धमानस्य शिशोः विष्णुनामस्मरणस्य अभ्यासः जातः अस्ति । हिरण्यकशिपोः विष्णुविषयकः द्वेषः शिशौ भक्तिरूपेण परिणतः अस्ति । लीलावती श्रेष्ठाय विष्णुभक्ताय जन्म दास्यति । अतः भवान् लीलावतीं मुञ्चित्वा स्वस्थानं गच्छतु" इति उक्त्वा लीलावतीं स्वस्य आश्रमं प्रति नीतवान् ।

आश्रमे नारदः दार्शनिकैः विषयैः सह विष्णोः गुणानां वर्णनम् अपि करोति स्म । तदा लीलावत्याः गर्भस्थः शिशुः अपि अवधानपूर्वकं तं विषयं शृणोति स्म । कालान्तरे लीलावती पुत्रं प्रसूतवती ।

हिरण्यकशिपुः घोरं तपः आचर्य ब्रह्माणं प्रसन्नं कृतवान् । 'अपेक्षितं वरं याचतु' इति ब्रह्मा तं सूचितवान् । तदा हिरण्यकशिपुः अनेकान् वरान् याचितवान् । तेषां वराणां कारणतः तं पृथिव्याम् आकाशे वा, दिने रात्रौ वा, गृहे बहिः वा, पशुः मानवः वा, देवाः मानवाः वा मारयितुं न अर्हन्ति स्म । सृष्टौ विद्यमानः कोऽपि जीवधारी तं मारयितुं न शक्नोति स्म । एतादृशाः अनेके वराः तेन ब्रह्मणः सकाशात् प्राप्ताः । ब्रह्मा तं सर्वैः वरैः अनुगृहीतवान् आसीत् ।



वरान् प्राप्य हिरण्यकशिपुः विजयगर्वेण प्रत्यागच्छन् आसीत् । आगमनमार्गे नारदस्य मुखात् सर्वम् इतिवृत्तं श्रुत्वा सः नारदस्य आश्रमं प्रति गतवान् । प्रह्लादः इति पुत्रस्य नाम कृतवान् । अनन्तरं पत्नीं पुत्रं च स्वीकृत्य राजधानीं प्रत्यागतवान् ।

आदौ हिरण्यकशिपुः इन्द्रस्य विषये प्रतीकारं साधयितुम् इष्टवान् । सः स्वर्गस्य उपरि आक्रमणं कृत्वा इन्द्रस्य सिंहासनं स्वायत्तीकृतवान् । सर्वाः दिशः आक्रम्य दिक्पालान् स्वाधीनान् कृतवान् । देवान् अपि बहुधा पीडितवान् ।



शचीदेव्याः अवमाननं कर्तुं यदा सः इष्टवान् तदा लीलावती तम् अवरुद्धवती । तथापि हिरण्यकशिपोः कोपः शान्तः न अभवत् । सः ऋषिमुनीनाम् आश्रमान् दग्धवान् । विष्णोः भक्तानां विषये अत्याचारम् आरब्धवान् ।

अन्ते सः विष्णोः सम्मुखीकरणम् एव अन्तिमलक्ष्यं मत्वा विष्णोः उत्तेजनम् आरब्धवान् । तथापि तेन विष्णोः दर्शनं न प्राप्तम् । अन्ते सः वैकुण्ठस्य उपरि आक्रमणं कृतवान् । तत्रापि तेन विष्णुः न दृष्टः ।

''मत्तः भीतः विष्णुः कुत्रापि अदृश्यरूपेण निलीय स्थितः अस्ति । भीरुः सः'' इति वदन् हिरण्यकशिपुः राजधानीं प्रत्यागतवान् ।

यथा यथा प्रह्लादः प्रवृद्धः तथा तथा तस्य विष्णुध्यानम् अपि प्रवृद्धम् । एतत् दृष्ट्वा हिरण्यकशिपुः चिन्तासागरे मग्नः अभवत् । एतादृशः वंशद्रोही मम वंशे कथम् उत्पन्नः इति तस्य चिन्ता आरब्धा । अतः सः तं विद्याभ्यासार्थं स्वस्य गुरुपुत्रयोः शण्डामर्कयोः समीपं प्रेषितवान् ।

प्रह्लादः गुरुकुले हरेः ध्यानं कुर्वन् एव विद्याभ्यासं समापितवान् । सहपाठिषु अपि विष्णुभक्तिं जागरयन् तेषां मनसि अपि मुक्तिमार्गविषये विशेषाभिरुचिम् उत्पादितवान् सः ।

विद्याभ्यासस्य समाप्तेः अनन्तरं शण्डामर्कौ प्रह्लादस्य प्रेषणार्थं हिरण्यकशिपोः समीपम् आगतवन्तौ । हिरण्यकशिपुः अत्यन्तं प्रीत्या पुत्रं स्वस्य अङ्के उपवेश्य - ''पुत्र ! भवान् स्वविद्यायाः परिचायकम् एकं पद्यं श्रावयतु'' इति उक्तवान् ।

प्रह्लादः स्वस्य मधुरकण्ठेन एकं गीतं श्रावितवान् । तस्य अर्थः आसीत् - ''गुरोः सकाशात् मया सर्वाः विद्याः अधिगताः । तासु विद्यासु श्रेष्ठतमा विद्या अस्ति विष्णोः ध्यानम् । विष्णोः स्मरणेन सर्वेषां जन्म सार्थकं भवति'' इति ।

प्रह्लादस्य मुखात् एतादृशानि वाक्यानि श्रुतवतः हिरण्यकशिपोः शरीरे कोपेन कम्पनम् आरब्धम् । सः अङ्के उपविष्टं पुत्रं क्रोधेन अधः पातितवान् ।

पुत्रस्य गुरू उद्दिश्य - ''किं भवन्तौ मम पुत्राय एतादृशीं शिक्षां दत्तवन्तौ ?'' इति पृष्टवान् ।

शण्डः अमर्कः च भयेन कम्पमानौ - ''महाराज ! अत्र आवयोः कोऽपि दोषः

नास्ति । कृपया अन्यथा मा भावयतु भवान्'' इति उक्त्वा गुरुकुले प्रह्लादस्य व्यवहारं विस्तरेण निवेदितवन्तौ ।

हिरण्यकशिपुः पुत्रं बोधितवान् – ''विष्णुः वराहवतारं प्राप्य भवतः पितृव्यं मारितवान् अस्ति । सः अस्माकं राक्षसकुस्य परमशत्रुः । विष्णोः स्मरणं कृतं चेत् अस्मद्वंशस्य एव अवमानः कृतः इव । अक्षम्यः अपराधः एषः । भवान् तस्य स्मरणं परित्यजतु'' इति ।

तदा प्रह्लादः अत्यन्तं शान्तेन स्वरेण – ''पितः ! अहं किं करवाणि ? लोहखण्डः यथा अयस्कान्तात् आकृष्टः भवति तथा मम मनः विष्णोः दिशि आकृष्टं भवति । भ्रमरः यथा कमलं विस्मर्तुं न शक्नोति तथा अहमपि विष्णुं विस्मर्तुं न शक्नोमि । विष्णोः विस्मरणं मम वशे नास्ति । यावत् मम शरीरे प्राणाः तिष्ठन्ति तावत् तस्य विस्मरणम् असम्भवम् । मम आत्मा एव विष्णुरूपः'' इति उक्तवान् ।

अल्पवयस्कस्य बालकस्य मुखात् एतादृशं वचनं श्रुत्वा हिरण्यकशिपुः आश्चर्यचकितः क्रुद्धः च अभवत् ।

सः क्रोधेन उक्तवान् – ''एवं तर्हि भवतः मरणं निश्चितम् । अन्नजलाभ्यां विना म्रियताम्'' इति ।

ततः तेन प्रह्लादः कारागृहं प्रति प्रेषितः । पुत्रप्रेम्णः कारणतः लीलावती व्याकुला अभवत् । दिनानि अतीतानि । लीलावत्याः दुःखं दृष्ट्वा हिरण्यकशिपुः प्रह्लादं कारागारात् मोचितवान् । किन्तु प्रह्लादः विष्णुध्यानं न त्यक्तवान् । पुनश्च क्रोधाविष्टः हिरण्यकशिपुः बालकं प्रह्लादं गजानां पादानाम् अधः पातितवान् । किन्तु बालकस्य केशस्य अपि



हानिः न अभवत् । सर्पाणां द्वारा दंशनार्थमपि प्रयत्नः कारितः । किन्तु सर्पाः बालकं प्रीत्या चुम्बित्वा फणां चालयन्तः नृत्यं कृतवन्तः । अनन्तरं प्रह्लादः पर्वतस्य शिखरस्य अधः पातितः । समुद्रे क्षिप्तः, कालकूटविषं पायितः च । तथापि सः न मृतः ।

एतत् दृष्ट्वा हिरण्यकशिपुः तं पृष्टवान् - ''भवान् किमर्थं न म्रियते ? एतस्य रहस्यं किम् ?'' इति ।

तदा प्रह्लादः हसन् - ''पितः ! अत्र रहस्यांशः कोऽपि नास्ति । गजेषु, सर्पेषु, पाषाणेषु, अग्नौ, समुद्रे, विषे, सर्वत्र च विष्णुः अस्ति । न केवलं तावत्, मयि भवति च विष्णोः अस्तित्वम् अस्ति । एतत् सत्यं भवान् न अवगच्छन् अस्ति । मम मारणस्य प्रयत्नः, मम प्राणानां रक्षणं च तस्य लीलानां माहात्म्यम् एव'' इति उक्तवान् ।

प्रह्लादस्य एतैः वचनैः हिरण्यकशिपोः क्रोधाग्निः इतोऽपि प्रज्वलितः अभवत् । सः तस्य बालकस्य हस्तं गृहीत्वा तं सभाभवनं प्रति आकर्षन् आनीतवान् । तस्य हस्ते गदा आसीत् । तत् दृश्यं दृष्ट्वा लीलावती मूर्च्छां गतवती । परितः स्थितवन्तः राक्षसप्रमुखाः सर्वे आश्चर्येण स्तब्धाः अभवन् ।

सभामण्डपस्य पुरतः कश्चन लोहनिर्मितः विजयस्तम्भः आसीत् । हिरण्यकशिपुः तं स्तम्भं प्रदर्शयन् प्रह्लादं पृष्टवान् - ''रे कुलद्रोहिन् ! सः मम विजयस्तम्भः अस्ति । मम अनुजस्य घातकेन विष्णुना सह युद्धं कृत्वा भवतः समक्षम् एव तस्य संहारं करिष्यामि । एवं कृत्वा प्रतीकारं साधयिष्यामि । किं भवतः विष्णुः सः एतस्मिन् स्तम्भे अपि अस्ति ?'' इति ।

झटिति प्रह्लादः - ''कः सन्देहः तत्र ? सः सर्वत्र अस्ति । तस्मिन् स्तम्भे अपि अस्ति इत्यत्र नास्ति कोऽपि सन्देहः'' इति उत्तरम् उक्तवान् ।

हिरण्यकशिपुः वेगेन गत्वा गदया स्तम्भं प्रहृतवान् । तदा सः स्तम्भः द्विधा भग्नः अभवत् । तस्य अन्तर्भागतः हूँकुर्वन् दशावतारेषु चतुर्थं नृसिंहावतारं धृत्वा विष्णुः दृष्टिगोचरः अभवत् ।

सिंहमुखः, मनुष्यशरीरः, उग्रनखः च सः प्रलयङ्करेण ध्वनिना गर्जनम् अकरोत् ।





# अकठिनः प्रश्नः

चिदानन्दस्वामी महापण्डितः इत्यत्र नास्ति सन्देहः । ग्रामेभ्यः बहुदूरे कस्यचन सरोवरस्य समीपे स्थिते उद्याने गुरुकुलं संस्थाप्य सुव्यवस्थितं तस्य व्यवस्थां पश्यति स्म सः ।

स्वस्य पञ्चदशे वयसि एव सः गृहं त्यक्त्वा देशान्तरेषु अटन् उत्तमेभ्यः पण्डितेभ्यः विद्याम् अधीतवान् आसीत् ।

पञ्चाशत्तमे वयसि नवद्वीपात् आगत्य सः अत्र गुरुकुलम् आरब्धवान् आसीत् । तस्मिन् गुरुकुले सर्वेषां प्रवेशः सुलभः न आसीत् ।

यः अस्मिन् गुरुकुले विद्यां पञ्च वर्षाणि यावत् अभ्यस्यति सः विनायासं यस्यां कस्यामपि राजसभायां लीलया उद्योगं प्राप्तुं शक्तः भवेत् एव ।

अत एव अनेके विद्यार्थिनः सुदूरेभ्यः ग्रामेभ्यः आगत्य अत्र शिक्षणं प्राप्य आत्मानं धन्यं भावयन्ति स्म ।

अत्र प्रवेशेच्छुकानां काचन परीक्षा क्रियते स्म । तस्यां विद्यार्थिनां बुद्धिमत्ता समयप्रज्ञा च परीक्ष्यते स्म । अस्यां परीक्षायाम् उत्तीर्णतां प्राप्तवद्भिः एव अत्र प्रवेशः लभ्यते स्म ।

कदाचित् सायङ्कालसमये अष्टादश-वर्षीयः कश्चन युवकः चिदानन्दस्वामिनं द्रष्टुम् आगतः । आगत्य पादवन्दनं कृत्वा – ''भवतः गुरुकुलस्य प्रसिद्धिं श्रुत्वा बहुदूरात् आगतोऽस्मि । आ बहुभ्यः दिनेभ्यः मम इच्छा अस्ति यत् भवतः अस्मिन् गुरुकुले भवादृशानां सकाशात् विद्या अधिग्रहीतव्या इति । अतः कृपया एतत् सौभाग्यं भवता मह्यं देयम्'' इति उक्तवान् ।

चिदानन्दस्वामी क्षणं यावत् तं तरुणमेव निर्निमेषदृष्ट्या पश्यन् परीक्षितवान् । तरुणस्य मुखं तेजःपूर्णम् आसीत् । स्वभावोऽपि सौम्यः नम्रः च अस्ति इति


CHANDAMAMA INDIA LIBRARY
MAY-04

आपाततः दर्शनेन भासते स्म । तस्मिन् गाम्भीर्यं जिज्ञासा च स्पष्टतया प्रकाशमाना आसीत् ।

विनीतं तं दृष्ट्वा चिदानन्दस्वामी उक्तवान् – ''अत्र गुरुकुले प्रवेशदानात् पूर्वम् आगतस्य परीक्षा क्रियते मया । सा परीक्षा नातीव कठिना । मम प्रश्नानाम् उत्तराणि यदि सम्यक् दीयन्ते तर्हि अत्र प्रवेशः प्राप्तः एव इति भावयितुम् अर्हति भवान् । उत्तरं दातुं न शक्तं चेत् विना प्रतिवचनं प्रतिगन्तव्यं भविष्यति भवता'' इति ।

'अस्तु । अहम् उत्तरं दातुं सन्नद्धः एव अस्मि । प्रश्नान् पृच्छतु गुरुदेव'' इति दृढतया उक्तवान् तरुणः ।

''सामान्यान् दश प्रश्नान् पृच्छानि, उत एकमेव कठिनं प्रश्नं पृच्छानि ?'' इति सहासं पृष्टवान् गुरुः ।

''दशानां प्रश्नानाम् उत्तरकथने समयः अधिकः अपेक्षितः । तावन्तं भवतः अमूल्यं समयं नाशयितुं नेच्छामि अहम् । अतः एकं कठिनं प्रश्नमेव पृच्छतु'' इति उक्तवान् तरुणः ।

''तर्हि विनाशङ्कं शीघ्रम् उत्तरं दातव्यम् । बीजस्य सृष्टिः प्रथमम् उत वृक्षस्य सृष्टिः'' इति पृष्टवान् गुरुः ।

''वृक्षस्य एव'' इति तरुणेन उत्तरं दत्तम् ।

साश्चर्यं तरुणं पश्यन् सः चिदानन्दस्वामी पृष्टवान् – ''भवतः उत्तरं सत्यमेव स्यात् । तथापि युक्तिरहितम् उत्तरं ग्राह्यं न भवति । कथं वृक्षस्य सृष्टिः आदौ इति भवान् वक्तुं शक्नोति किम् ?'' इति ।

तदरुणेन उक्तम् – ''क्षम्यतां गुरुदेव । भवता उक्तम् आसीत् यत् अहम् एकम् एव प्रश्नं पृच्छामि इति । किन्तु इदानीं द्वितीयः प्रश्नः पृष्टः भवता । अतः सविनयं निवेदयामि यत् अस्य प्रश्नस्य उत्तरदानस्य आवश्यकता नास्ति इति'' इति ।

तस्य उत्तरेण यद्यपि चिदानन्दस्वामी आश्चर्यचकितः, तथापि किञ्चित् विचिन्त्य सः तस्य युवकस्य सूक्ष्मां बुद्धिं समयप्रज्ञां च दृष्ट्वा सन्तुष्टः ।

तद्दिने एव तेन गुरुकुले प्रवेशः लब्धः एव ।



# सर्पस्य उपायनम्




पुरातनी कथा एषा । कस्यचित् कृषिकस्य गृहे गिजेलानामिका काचित् बालिका कार्यं कुर्वती निवसति स्म । सा अनाथा आसीत् इति कारणतः जीवननिर्वहणाय तथा कार्यं करणीयम् आसीत् तया । कृषिकः तस्यै वेतनं किमपि न ददाति स्म। कठिनेषु कार्येषु तां योजयति स्म । किन्तु दिने त्रिवारं भोजनं, शयनाय शय्या च तेन दत्ता आसीत् । गिजेला तदेव स्वस्य परमं भाग्यं मन्यमाना कृषिकाय कृतज्ञतां समर्पयति स्म ।

कदाचित् प्रातः कृषिकस्य पत्नी गिजेलाम् आहूय उक्तवती – ''धेनुभ्यः क्षीरदोहनं कृत्वा आनयतु'' इति । गोष्ठं बहु दूरे आसीत् । वृष्टिरपि आगच्छन्ती आसीत् । अतः सा गोष्ठप्राप्तितः पूर्वमेव पूर्णतया आर्द्रा सञ्जाता । तथापि शैत्येन कम्पमाना एव सा क्षीरं दोग्धुम् उद्युक्ता । दोहनसमाप्तिकाले तस्याः पृष्ठभागात् फूत्कारः श्रुतः । सा मुखं परिवर्त्य दृष्टवती । कश्चन सर्पः तस्याः समीपमेव आगच्छन् दृष्टः तया । तस्य शिरसि कश्चन स्वर्णमुकुटः राजते स्म । गिजेला भीत्या उच्चैः आक्रोशनं कर्तुम् उद्युक्ता । तावति काले सर्पस्य नेत्रे तया दृष्टे । सर्पस्य नेत्रयोः दर्शनेन भासते स्म यत् सः पिपासितः इति । अतः दयया पूर्णा सा बालिका क्षीरपात्रं तस्य पुरतः स्थापितवती । सर्पः सर्वं क्षीरं पीत्वा सन्तुष्टः सन् कृतज्ञतां मुखभावेन एव प्रदर्श्य ततः बहिरागत्य अदृश्यः अभवत् ।

सर्पेण सर्वं पीतम् आसीत् इत्यतः पात्रे क्षीरमेव न आसीत् । तस्मात् गिजेला नितरां भीता । 'गृहे अद्य मम भोजनादिकं न भवेत्' इति चिन्तयन्ती सा भीत्या गृहं गतवती ।

गृहे पाकगृहात् कृषिकपत्न्याः स्वरः श्रुतः – '' गिजेले ! क्षीरम् आनीतं खलु ?'' इति ।

'आम्' इति मन्दम् उक्तवती गिजेला ।

''तत् पात्रम् अत्र आनयतु । तत् क्षीरम् अत्रत्ये पात्रे पूरयतु'' इति उक्तवती स्वामिनी ।



गिजेला तत् क्षीरपात्रम् अधोमुखं कृतवती । अहो, आश्चर्यम् ! तस्मात् पात्रात् क्षीरं प्रवाहरूपेण पतत् अस्ति ! पात्रत्रयं सम्पूर्णम् अभवत् ।

''एषा बालिका बहुचतुरा'' इति कृषिकस्य पत्नी ऐदम्प्राथम्येन तां प्रशंसन्ती स्मितमुखी अभवत् ।

''अहम् इतः परं भवतीमेव एतत्कार्ये नियोजयिष्यामि'' इति उक्तवती सा ।

सर्पस्य स्मरणात् भीता सा बालिका झटिति उक्तवती – ''न ! न ! कृपया मां तत् कार्यं मा वदतु । अन्यत् यत्किमपि कार्यं कर्तुम् अहं सिद्धा अस्मि'' इति ।

''अद्य आरभ्य भवत्या एव गोदोहः करणीयः । न केवलं प्रातः, सायमपि । अस्मिन् विषये चर्चा मास्तु'' इति कठिन-स्वरेण उक्तवती कृषिकस्य पत्नी ।

प्रतिदिनं गिजेलया एव गोदोहनकार्यं करणीयम् आपतितम् । अतः प्रतिदिनं सा पूर्ववदेव सर्वं क्षीरं सर्पाय ददाति स्म । किन्तु गृहं प्रति गमनानन्तरं तत्र क्षीर-प्रवाहः एव प्रवहति स्म । कृषिकस्य पत्नी यावदिच्छति ततोऽप्यधिकमेव क्षीरं भवति स्म गृहे । तेन सा बहु सन्तुष्टा ।

कदाचित् तस्याः मनसि विचारः उत्पन्नः यत् गिजेला दोहनं करोति चेत् कथम् अधिकं क्षीरं प्राप्यते इति । किन्तु सौभाग्यवशात् स च विषयः अधिकं प्राधान्यं नावहत् । अतः स्वर्णमुकुटधारी सर्पः केनापि न ज्ञातः एव ।

क्रमेण बालिकासर्पयोः मैत्री सञ्जाता । यतः सर्पकारणात् एव तस्याः इदानीम् अधिकं कष्टं न आसीत्, यावत् पूर्वम् आसीत् । सा सर्पेण सह वार्तालापं कर्तुम् इच्छति स्म । किन्तु सर्पः वक्तुम् असमर्थः । तथापि सः सर्पः नेत्राभ्यामेव स्वस्य कृतज्ञतां प्रकटयन् मुदं जनयति स्म ।

एवमेव कानिचन वर्षाणि अतीतानि । गिजेला इदानीं काचन सुन्दरी तरुणी अभवत् । अनेके तरुणाः तां परिणेतुं सिद्धाः । तदा कृषिकदम्पती अपि अवगतवन्तौ यत् इतःपरं गिजेला अस्माकं गृहे अधिककालं न स्थातुम् अर्हति इति । अतः तया सह तयोः व्यवहारः मृदुः जातः ।

गिजेला यथापूर्वं गोदोहनं, गृहकार्याणि च कुर्वती एव आसीत् । कोऽपि तरुणः मां परिणयेत् इति विश्वासः अपि तस्याम् आसीत् । कश्चन तरुणः तां परिणेतुं सिद्धः

अभवत् अपि । सः सामान्यतरुणेभ्यः भिन्नः इव भासते स्म । अतः तस्य परिणयं सा इष्टवती । कृषिक-दम्पती चिन्तितवन्तौ यत् एतस्याः विवाहसमये अमूल्यम् उपायनं दातव्यम् इति ।

गिजेला विवाहस्य पूर्वस्मिन् दिने गोदोहं कर्तुं गोष्ठं गता । प्रतिदिनमिव तद्दिने अपि सर्पः क्षीरं पातुम् आगतः ।

तं दृष्ट्वा दुःखेन उक्तवती गिजेला - "अद्यतनम् एव अन्तिमं क्षीरदानं मम । इतः परम् अहम् अत्र न आगमिष्यामि, यतः मम विवाहः निश्चितः । विवाहानन्तरं पत्या सह अहं नूतनगृहं गमिष्यामि । इतः परम् आवयोः मेलनं न भविष्यति । मम भाविनः पत्युः समीपे धेनवः न सन्ति । अतः क्षीरं दातुम् अहम् असमर्था अस्मि" इति ।

सर्पः दुःखितः सन् सान्त्वयन्निव तां दृष्टवान् ।

"भवतः सहवासः मम प्रियः आसीत् । यः मां परिणेष्यति सः न धनिकः । किन्तु



उत्तमः दयालुः च । आवां दरिद्रौ चेदपि सुखेन जीविष्यावः" इति सर्पम् उक्तवती सा । सर्पः तां पुनरेकवारं प्रीत्या पश्यन् ततः वेगेन निर्गतवान् ।

गिजेलायाः विवाहोत्सवः वैभवेन प्रचलन् आसीत् । ग्रामीणाः सर्वेऽपि विवाहार्थम् आगताः आसन् । तदा अकस्मात् जनानां मध्ये कोलहलः उत्पन्नः । सर्वेऽपि उत्थित-वन्तः । किन्तु केनापि न ज्ञातं – तत्र किं प्रचलत् अस्ति इति ।

तदा कश्चन फूत्कारः सर्वैः श्रुतः । कश्चन स्वर्णमुकुटधारी सर्पः अपि जनैः दृष्टः । सः सर्पः साक्षात् वधूसमीपं गतः । तस्याः शरीरम् आरुह्य अङ्के स्वशिरसि स्थितं मुकुटम् अपातयत् । यथा आगतं तथैव निर्गतः सः कुत्रापि अन्धकारे अदृश्यः अभवत् ।

सर्वेऽपि चित्रार्पिताः इव एतत् दृश्यं दृष्टवन्तः । गिजेलायाः मनः कृतज्ञताभावेन पूर्णम् । यतः तस्याः मित्रेण विवाहकाले अमूल्यम् उपायनं दत्तम् आसीत् । सा तं स्वर्णमुकुटं स्वकोशे स्थापितवती । ततः तस्याः विवाहः वैभवेन सम्पन्नः ।

अनन्तरदिने प्रातः गिजेला स्वकोशम् उद्घाटितवती । सः कोशः सुवर्णनाणकैः पूर्णः आसीत् । कोशतः सुवर्णनाणकानि निष्कासितवती सा । किन्तु पुनः कोशः सुवर्ण-नाणकैः पूर्णः अभवत् । ततः आरभ्य तस्याः धनकोशः कदापि रिक्तः न अभवत् । गिजेला तत्पतिश्च इदानीं ग्रामे महाधनिकेषु अन्यतमौ जातौ ।

ततः तौ स्वस्य औदार्येण, परोपकार-शीलतया च सर्वेषां ग्रामीणानां प्रीतिपात्रतां गतौ ।



# अमरफलम्

प्राचीने काले कश्चित् कौटुम्बिक-जीवनात् विरक्तिं प्राप्य अरण्यं गत्वा मुनिवृत्त्या जीवन् तपस्याम् अकरोत् । तस्य तपसा सन्तुष्टा देवता कदाचित् प्रत्यक्षीभूय एकं फलं दत्त्वा – ''अहं भवतः तपस्यया सन्तुष्टा अस्मि । भवतः हस्ते स्थितम् अमरफलम् । एतत् गृहीत्वा यत् प्राार्थ्यते तत् प्राप्यते'' इति उक्त्वा ततः अन्तर्हिता जाता ।

मुनेः काऽपि इच्छा न आसीत् । सः अचिन्तयत् यत् एषा देवता मम परीक्षायै एव एतत् फलं दत्तवती स्यात् इति । एतत् जनानाम् उपयोगाय भवतु इति विचिन्त्य सः राज्ञः समीपं गतवान् । राजा तं यथोचितं सत्कृत्य आगमनकारणं पृष्टवान् ।

''राजन् ! एतत् अमरफलम् । यः एतत् क्रेष्यति तस्य एकस्याः इच्छायाः पूर्तिः भविष्यति । येन मूल्येन क्रीतं ततोऽपि अल्पेन मूल्येन क्रेता एतस्य विक्रयणं कुर्यात् । इच्छापूर्तेः अनन्तरं सप्ताहादधिकं कालम् एतत् स्वसमीपे न रक्षणीयम् । तथा रक्षितं चेत् अपायः निश्चितः । मम कापि इच्छा नास्ति । अतः अहम् एतत् भवते ददामि । केन मूल्येन क्रेतुम् इच्छति भवान् ?'' इति अपृच्छत् मुनिः ।

एतस्य श्रवणात् राज्ञः मनसि इच्छा जागरिता – प्रतिवेशिराज्यं जेतव्यम् इति । अतः सः लक्षं मुद्राः दत्त्वा तत् फलं क्रीतवान् ।

मुनिः राज्ञे अमरफलं यच्छन् अवदत् – ''स्वस्य इच्छायाः पूर्तेः अनन्तरम् एतत् अन्यस्मै विक्रेतव्यम् । सः क्रेता अपि एवमेव कुर्यात् । सः सम्यक् बोधनीयः'' इति ।

एतावत् उक्त्वा मुनिः राजतः प्राप्ताः लक्षं मुद्राः दरिद्रेभ्यः वितीर्य ततः निर्गतवान् । अरण्यं प्रत्यागत्य यथापूर्वं तपसि लीनः जातः सः । अमरफलस्य

पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा



कारणतः राज्ञः इच्छा अल्पे एव काले पूर्णा जाता । युद्धे प्रतिवेशिराजः घोरं पराजयं प्राप्तवान् । तस्मात् शत्रुराजस्य राज्यम् अपि एतस्य राज्ञः अधीनं जातम् ।

विजयं प्राप्तवान् राजा जनैः पूर्णायां सभायाम् अमरफलं सर्वेभ्यः प्रदर्श्य तस्य महिमानम् अपि वर्णयित्वा अवदत् – ''यः क्रेतुम् इच्छति तस्मै अहम् एतत् दास्यामि'' इति ।

एतत् श्रुत्वा दीर्घकालिकेन व्याधिना ग्रस्तः कश्चन धनिकः नवतिसहस्त्रेण मुद्राभिः तत् क्रीतवान् । स्वस्य व्याधिं निवारित-वान् च ।

तदनन्तरं तत् अमरफलम् अन्यस्य हस्तं प्रति अगच्छत् । एवं हस्तात् हस्तं गच्छत् तत् फलं बहूनां कष्टानि न्यवारयत् । तस्य कारणतः केचन विद्यावन्तः जाताः, पुनः केचन वणिजः जाताः, अन्ये केचन व्याधिभ्यः मुक्ताः जाताः । इच्छापूर्तिं कुर्वतः अमरफलस्य कीर्तिः प्रभावः च प्रवृद्धः ।

महान् कालः अतीतः । पार्श्ववायु- पीडितः पुष्पार्कः नाम कश्चन जनः आसीत् । सः पूर्वं कदाचित् अमरफलं क्रीत्वा पत्नीं मरणात् रक्षितवान् आसीत् । इदानीं पुनः तत् क्रेतुम् इच्छन् सः तस्य मूल्यं विचारितवान् । तदा ज्ञातं यत् तस्य मूल्यं पैसाद्वयात्मकम् इति । रोगस्य अपगमस्य अनन्तरम् एक-पैसामूल्येन विक्रेतव्यम् आसीत् तत् ।

पैसामूल्येन क्रीतवान् जनः तस्य विक्रयणं कर्तुं न अर्हति । यतः पैसा एव कनिष्ठतम-

मूल्यकं नाणकम् । अतः पुष्पार्कः अमरफलस्य क्रयणविचारं परित्यक्तवान् ।

एतावता तस्य पत्नी एतं विचारं ज्ञातवती । पतिः यथा न जानीयात् तथा सा पैसाद्वयमूल्येन तत् फलं क्रीतवती । फलस्य प्रभावतः तस्याः पतिः स्वस्थः जातः ।

स्वस्य रोगः यदा अपगतः तदा पुष्पार्कः अचिन्तयत् यत् वैद्यस्य औषधस्य प्रभावात् एव एतत् सम्पन्नम् इति ।

'येन मूल्येन क्रीतं ततोऽपि अल्पेन मूल्येन विक्रेतुं सर्वथा न शक्यते इत्यतः क्रेतुः विपत्तिः निश्चिता । क्रेतुः या विपत्तिः भवेत् ताम् अहम् एव प्राप्स्यामि' इति निश्चितवती गृहस्वामिनी । 'केन रूपेण विपत्तिः बाधिष्यते इति न ज्ञायते' इति चिन्तयन्ती सा ज्वरग्रस्ता जाता ।

कदाचित् तस्य गृहस्य भृत्यः ताम् अवदत् - ''आर्ये ! भवती अस्वस्था इव भाति'' इति ।

''इतः परं बहूनि दिनानि अहं न जीविष्यामि'' इति वदन्ती अश्रूणि स्रावयन्ती सा अमरफलस्य कथां श्रावितवती ।

''एतस्य फलस्य, भवत्याः मरणस्य च कः सम्बन्धः ?'' इति अपृच्छत् भृत्यः ।

''अहम् एतत् फलं कस्मै वा विक्रीणीय ? यः एतत् क्रेष्यति सः विपदा ग्रस्तः भविष्यति । किम् अहं जानती अपि कमपि विपद्गर्ते पातयेयम् ? न । सर्वथा न । अहम् एव मरणं प्राप्स्यामि'' इति अवदत् गृहस्वामिनी ।

तदा भृत्यः हसन् अवदत् - ''केनापि मरणं प्राप्तव्यं नास्ति । पैसात्मकेन मूल्येन मह्यम् एव ददातु भवती'' इति ।

''अये ! स्वस्य इच्छायाः पूर्तेः अनन्तरं तत् फलं कस्मै वा विक्रेष्यते भवान् ?'' इति सातङ्कं अपृच्छत् गृहस्वामिनी ।

''मया इच्छापूर्तिः कृता चेदेव खलु विक्रयणस्य प्रसक्तिः ? वस्तुतः तु मम इच्छा कापि नास्ति एव । यस्य इच्छा एव नास्ति तस्य विपत् कथं वा भवेत् ? अहं तत् फलं पेटिकायां स्थापयिष्यामि'' इति उक्त्वा भृत्यः पैसात्मकेन मूल्येन तत् फलं गृहस्वामिनीतः क्रीतवान्, गृहं गत्वा पेटिकायां तत् स्थापितवान् च । एतदनन्तरं तत् अमरफलं केनापि न प्राप्तम् । तस्य भृत्यस्यापि कापि हानिः न जाता ।



राज्ञः शान्तिदेवस्य अदृश्यताकारणतः शान्तिपुरे अशान्तिः प्रसृता जाता । राज्ञी दिवं गता । शिशुः राजकुमारः जयानन्द-समीपे सुरक्षिततया तिष्ठति । जयानन्दः जयनगरस्य अधिपतिना मिलित्वा राजकुमारस्य पदकोपेतं कण्ठहारं दत्त्वा – 'एवं सुरक्षिततया स्थापयतु' इति वदति ।

9

# आर्यः

## राजकुमारस्य अज्ञातं रहस्यम्

चित्रम् - गान्धि-अय्यः

जयानन्दः गमनाय उद्युक्तः भवति ।

अहं कण्ठहारं सुरक्षिततया रक्षिष्यामि श्रीमन् !

यः अद्यतनस्थितेः कारणम् अस्ति तेन स्वजीवने कठिना परिस्थितिः सम्मुखीकरणीया भविष्यति निश्चयेन ।

अन्तरात्मा मम वदति यत् राजा स्वस्य प्राणानां रक्षणे समर्थः जातः इति ।

अहम् आशासे यत् सः अचिरात् एव प्रत्यक्षः भूत्वा राज्ये शान्तिं पुनरपि प्रतिष्ठापयिष्यति इति ।

तावत् मया किं किमपि अन्यत् करणीयम् अस्ति ?

तस्य आगमनस्य प्रतीक्षां कुर्वद्भिः अस्माभिः वर्तमानस्थिति-विषये विशेषदृष्टिः स्थापनीया । साधयामि मन्दिरसमीपे व्याघ्री मां प्रतीक्षते ।

शान्तिपुरे वीरसिंहः राज्ञः आगमनस्य प्रतीक्षाम् अकृत्वा स्वयम् अधिकारसूत्रं गृहीतवान् ।

अमरसिंह ! प्रजानाम् अवधानम् अन्यत्र नेतव्यम् । प्रतिवेशिराज्यस्य आक्रमणं कुतो वा न करणीयम् ? एतस्य विषये भवतः आशयः कः ?

युक्तम् एतत् । अमृतपुरस्य राजा प्रेमनाथः स्वस्य पुत्र्याः पुत्रस्य च अदृश्यता-कारणतः अस्वस्थः जातः अस्ति ।

सेनापतिः दलपतिभिः सह गुप्तसमालोचनं करोति ।

*अनन्तरदिने आयुधागारे....*

वयम् अमृतपुरस्य आक्रमणं कदा करवाम ?

मम खड्गः रक्तपानाय नितरां समुत्सुकः अस्ति ।

दलपतिप्रभृतयः छद्मवेषेण स्थितं वसन्तं न अभिजानन्ति । सः रहसि स्थित्वा सम्भाषणं शृणोति ।

अमृतपुरस्य आक्रमणम् !

मया अविलम्बेन अमृतपुरं प्रति गन्तव्यम् । देशस्य सेवनाय एषः उत्तमः अवसरः ।

सः बहिः स्थितं कञ्चन दलपतेः अश्वम् आरुह्य ततः वेगेन प्रस्थानं करोति अमृतपुरम् उद्दिश्य ।



सः अमृतपुरे शान्तिपुरस्य भूतपूर्वमन्त्रिणा मानवेन्द्रेण मिलति ।

वसन्त ! शान्तिपुरतः का विशेषवार्ता आनीता भवता ?

तत्रत्या सेना अमृतपुरस्य आक्रमणाय योजनां कुर्वती अस्ति ।

अस्माभिः अचिरात् एव राजा प्रेमनाथः वक्तव्यः ।

मानवेन्द्रेण सह अमृतपुरस्य सेनाधिपतिः अपि अस्ति ।

मेघनाथः सेनां सावधानां कृतवान् अस्ति महाराज !

महाराज ! यावत् प्राणाः तिष्ठन्ति तावत् वयं देशस्य रक्षणं करिष्यामः ।

शत्रवः विना श्रमम् एतावत्पर्यन्तम् आगन्तुं न अर्हन्ति । मम विश्वासः - नन्दिनी-नदी अस्मान् रक्षिष्यति इति ।



अकस्मात् झञ्झावातः उत्पद्यते ।

तस्मात् नदी उद्गता भवति ।

नौकाः डोलायमानाः भवन्ति वामतः, दक्षिणतः च ....

हन्त ! नौका निमज्जति ! रक्ष्यताम् ।

अस्माकं दलपतिः क्व गतः ?

रक्ष्यताम् ! अहं मज्जन् अस्मि ।

सर्वे सैनिकाः प्रवाहेण नीयमानाः भवन्ति । बहवः जले निमग्नाः । राज्ञा प्रेमनाथेन यथा चिन्तितं तथैव प्रवृत्तम् ।



# जलस्य संरक्षणम्

वीणया चेन्नैनगरस्थस्य मातुलस्य गृहं प्रति प्रस्थितम् आसीत् । मातुलस्य गृहं प्रति गमनाय महान् उत्साहः तस्याः । रेल्वेस्थानकात् कार्यानेन प्रस्थिता सा नगरस्थानि महाभवनानि दृष्ट्वा नितराम् आश्चर्यचकिता । यदा गृहस्य पुरतः यानं स्थगितं तदा मातुलानी रेणुका तस्याः पुत्रौ अजयः विजयः च तान् सहर्षं स्वागतीकृतवन्तः ।



पाणिपादं क्षालयितुम् उद्युक्ता वीणा । मातुलानी तस्यै स्नानगृहं प्रदर्श्य उक्तवती – ''वयं प्रतिदिनं प्रातः सायं च किञ्चित्कालम् एव जलं प्राप्नुमः । अतः पात्रेषु जलं सङ्गृह्य स्थापयामः । मितपरिमाणेन यदि न उपयुज्येत तर्हि हस्तक्षालनादिनिमित्तम् अपि कष्टम् अनुभोक्तव्यं भवेत्'' इति ।

तदा वीणा आश्चर्येण मातुलानीं पृष्टवती – ''आर्ये ! अस्माकं प्रदेशे जलभावः नाम्नापि नास्ति । अत्र तु महान् जलाभावः । एवं जलाभावे सत्यपि भवती कथं सर्वं व्यवहारं सुचारु निर्वहति ?'' इति ।

''जलस्य सञ्चयः विशेषतः चिन्त्यते अस्माभिः । तदर्थं सन्ति अनेके उपायाः । पात्रक्षालनसमये क्षालनचूर्णोपेतानि पात्राणि सर्वाणि समानजलेन क्षालयित्वा अनन्तरं शुद्धजलेन क्षाल्यते । फलानां शाकानां च क्षालनम् अपि पात्रमितेन जलेन क्रियते । यदा क्षालनीयानि वस्त्राणि बहूनि भवन्ति तदा एव क्षालनयन्त्रं चाल्यते । तस्मात् जलस्य मितोपयोगः भवितुम् अर्हति । नलिकातः यदि जलं स्रवति तर्हि झटिति एव समीकार्यते । अस्मद्भवने वृष्टिजलसंरक्षणाय अपि व्यवस्था कृता अस्ति'' इति उक्तवती मातुलानी ।

सर्वं श्रुत्वा वीणा उक्तवती – ''मया इदानीं जलस्य महत्त्वं सम्यक् अवगतम् । जलस्य अपव्ययः किञ्चिदपि यथा न स्यात् तथा जागरूकतां वक्ष्यामि इतः परम्'' इति ।

DO YOU KNOW?
75% of the earth is water
But most of it is not potable
Still would you let it go waste ?
Children,
Be an active participant in PCRA's conservation mission.
Remember, conservation leads to a beautiful tomorrow.
Write a slogan on Water Conservation and win free book
I save water because
Name : Age :
School :
Class
Address :
Ph :
PETROLEUM CONSERVATION RESEARCH ASSOCIATION

# पृष्टोऽयं भवताम् पृष्टोऽयं भवताम्

## भवदर्थकं विज्ञानम्

### हम्मिङ्गपक्षी

हऽऽम् इति शब्दं श्रुत्वा कश्चन कीटः आगतः इति मत्वा मा धावन्तु । शब्दोऽयं हम्मिङ्गपक्षिणः । प्रायः सर्वे पक्षिणः पक्षौ चालयन्तः पुरोगत्या गन्तुम् अर्हन्ति । किन्तु हम्मिङ्ग्पक्षिणः गतिः तु सर्वतोमुखी । 'हेलिकाप्टर् यथा सञ्चरति तथा' इति एतस्य गतिः वर्णयितुं शक्या । वामतः, दक्षिणतः, ऊर्ध्वभागे, अधोभागे, प्रतीपगत्या च सः उड्डयने समर्थः । पुष्पेभ्यः मकरन्दं चूषन् कीटः इव गतिराहित्येन आकाशे स्थातुम् अपि शक्नोति अयम् । एतदर्थं तस्य पादौ नितराम् अनुकूलौ ।

एषः प्रतिकलं (Second) ५०-६० वारान् स्वस्य पक्षौ चालयति प्रायः । केचन दक्षिणामेरिकीयाः हम्मिङ्गपक्षिणः प्रतिनिमेषं ५००० वारान् पक्षं चालयितुं समर्थाः । तादृशे अवसरे पक्षचालनं स्फुटतया न दृश्यते । धूसरपट्टिका काचित् दृश्यते इव ।

एतादृशाय उड्डयनाय प्रभूता शक्तिः आवश्यकी । अतः एषः पक्षी प्रतिदशनिमेषम् आहारं सेवते । आदिनम् आहारं सेवमानः एव भवति सः ।



## परिसरवैचित्र्यम्

### मरुभूमिः अपि भवति वासयोग्यः



मरुभूमौ यैः निवासः क्रियते तैः अत्युग्रः आतपः, जलाभावः, सूर्यतापात् रक्षणाभावः, आश्रयाभावः, अन्येषाम् आक्रमणम् इत्यादयः विपत्तयः सम्मुखीकरणीयाः भवन्ति । एतादृशीः समस्याः सम्मुखीकर्तुम् अपि शक्तिः दत्ता अस्ति भगवता केषाञ्चित् जीविनां कृते । जीवविकासक्रमः भवति एतादृशः ।

आफ्रिकादेशीयायां शिलामय्यां मरुभूमौ कश्चन सरटः जीवति । तस्य पुच्छं भवति । एतादृशाः पुच्छोपेताः सरटाः आफ्रिकादेशस्य आग्नेयदिशि (दक्षिणपूर्वयोः मध्ये ) द्रष्टुं शक्याः । एते स्वस्य तीक्ष्णैः नखैः भूमौ द्विमीटरात्मकं गर्तं निर्मान्ति । तत्र वसन्तः ते दिनस्य तापाधिक्यात् रात्रेः शैत्याधिक्यात् च आत्मानं रक्षन्ति ।

तेषां पुच्छं किञ्चन प्रबलम् आक्रमण-साधनम् । आत्मरक्षणाय अपि एतदेव पुच्छम् उपकारकं भवति तेषाम् ।

# पृष्ठोऽयं भवताम् पृष्ठोऽयं भवताम्

## भवन्तः जानन्ति किम् ?

### पूगवृक्षः

पूगफलं प्रायः सर्वैः ज्ञायते एव । एतस्य वाणिज्यमूल्यम् अधिकम् । एतस्मिन् फले 'टेनिन्'नामकः अंशः भवति । कृष्णवर्णीयां रक्तवर्णीयां च मर्शी निर्मातुम् एतस्य उपयोगः क्रियते । दन्तचूर्णस्य निर्माणार्थम् अपि एतस्य चूर्णस्य उपयोगः क्रियते ।

पूगवृक्षः कृशः उन्नतः च भवति । १८-२० मीटरात्मकं भवति प्रायः पूगवृक्षाणाम् औन्नत्यम् । एतस्य वृक्षस्य शाखाः न भवन्ति । वृक्षस्य परिधिः



भवेत् १५ सेण्टीमीटरात्मकः । आरोपणानन्तरं पञ्चवर्षाभ्यन्तरे किञ्चिदधिककालानन्तरं वा वृक्षे फलोत्पत्तिः दृश्यते । वर्षे सकृत् फलति अयं वृक्षः । एकः वृक्षः एकस्मिन् वर्षे ३०० फलानि दातुम् अर्हति । पूगवृक्षाः आधिक्येन केरलराज्ये, पश्चिमवङ्गराज्ये, असमराज्ये, कर्णाटके च दृश्यन्ते । यत्र वृष्टिः अधिकप्रमाणेन भवति तत्र पूगकृषिः भवितुम् अर्हति ।

## अभिवर्ध्यतां ज्ञानशक्तिः

### भारतस्य लोकसभा

१. इदानीं लोकसभायां कति सदस्याः भवन्ति ?





२. भारतस्य प्रधानमन्त्री केन चीयते ?

३. मतदानार्हता कदा प्राप्यते ?





४. भारते उपराष्ट्रपतिः केन चीयते ?

५. संविधाने भारतं कथं वर्णितम् ?





६. कति मूलभूताः अधिकाराः निश्चयेन प्राप्यन्ते इति संविधाने उक्तम् अस्ति ?

(उत्तराणि ६६ तमे पृष्ठे)

# चित्रशीर्षिकास्पर्धा



**अधस्तनं चित्रद्वयं दृष्ट्वा परस्पर-सम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**



TAJY PRASAD



NARAYANA MURTHY TATA

**समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -**
**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

अभिनन्दनानि

**'मार्च्'मासस्य चित्रशीर्षिकाप्रेषिका -**

**कु. महिता महेश**

पि - ३०२, 'अत्रीयम्' कलाक्षेत्रमार्गः
चेन्नै - ६०००४१

**पुरस्कृता शीर्षिका**





**नगरवीथ्यां अनुभवस्य भरः ।**
**विमानपत्तनवीथ्यां विभवस्य भारः ।**

## परिवर्ध्यतां ज्ञानम्

१. ५४३ (+ उभौ नामाङ्कनपुरस्सरम् आगतौ अपि)

२. राष्ट्रपतिना । (पक्षेण पक्षैः वा यदा स्वनायकः चीयते ततः एषा नियुक्तिः भवति ।)

३. अष्टादशवर्षीयेण, ततोऽप्यधिकवयसा युक्तेन च ।

४. लोकसभायाः राज्यसभायाः च सदस्याः संयुक्ताधिवेशने ।

५. सार्वभौमः समाजवादाधारितः मतनिरपेक्षः प्रजातन्त्रात्मकः देशः इति ।

६. सप्त (७)

Printed and Published by B.Viswanatha Reddi at B.N.K. Press Pvt. Ltd. Chenbai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Vihwam

# junior CHANDAMAMA



## COMPLETES



# ONE YEAR

*Thanks to support and encouragement from its*

*Young readers* — *Parents* — *Teachers*

The MAY 2004 issue of

## JUNIOR CHANDAMAMA

*is being planned as a special issue!*



> MORE PAGES  > MORE FEATURES  > MORE ACTIVITIES

**The 60 page special issue will be in the market by April third week**

**Price Rs.15***

**RESERVE YOUR COPY NOW!**

** Price increase will not affect existing subscriptions*

---

*Enquiries / Subscriptions to*

**CHANDAMAMA INDIA LTD, 82 Defence Officers Colony**
**Ekkaduthangal, Chennai 600 097. Ph: 22347399, 22313637.**

